~~[illegible] काशीनाथपाण्डेय~~

~~[illegible]~~

पुस्तकेयं विदुषामनूच्यस्य
काशीनाथ मिश्रस्य
जगन्नाथ पुरी निवासिनः

(अमुद्रभूतमास्ते नवमुद्रणमतते)

महामहोपाध्यायश्रीमद्भट्टोजीदीक्षितप्रणीता

सिद्धान्तकौमुदीव्याख्या

# प्रौढमनोरमा

अव्ययीभावान्ता ।

श्रीहरिदीक्षितविरचितेन लघुशब्दरत्नेन विभूषिता ।




काश्यां

चौखम्बासंस्कृतपुस्तकालयाध्यक्षेण

हरिदासगुप्तेन

स्वकीये विद्याविलासयन्त्रे संमुद्र्य

प्रकाशिता ।

———

१९०६

श्रीगणेशाय नमः ।

---

ध्यायंध्यायं परं ब्रह्म स्मारंस्मारं गुरोर्गिरः ।
सिद्धान्तकौमुदीव्याख्यां कुर्मः प्रौढमनोरमाम् ॥ १ ॥

ह य व र ट् । हकारोपदेशः अट्अश्हश्इण्ग्रहणेषु हकारग्रहणार्थः । अर्हेण । अड्व्यवायेपीति णत्वम् । देवा हसन्ति । भोभगोइति रोर्यत्वम् । देवो हसति । हशि चेत्युत्वम् । लिलिहिढ्वे । लिलिहिध्वे । विभाषेट इति वा ढः ॥

---

शेषविभूषणमीडे शेषाशेषार्थलाभाय ।
दातुं सकलमभीष्टं फलमीष्टे यत्कृपादृष्टिः ॥ १ ॥

ध्यायमिति । ध्यात्वाध्यात्वेत्यर्थः । णमुलन्तमेतत् । परं सर्वजगदुपादानम् । कार्यब्रह्महिरण्यगर्भव्यावृत्तयइदम् । ध्यानं चिन्तापरपर्यायं स्मृत्यनुकूलव्यापाररूपम् । स्मरणं तु तज्जन्यमिति विशेषः । गुरोरित्येकवचनेन सर्वविद्यालाभ एकस्मादेव गुरोरिति सूचितम् । प्रौढानां मनो रमयतीत्यर्थिकां मनोरमाम् । प्रौढत्वं च सकलदर्शनार्थज्ञानपूर्वकमहाभाष्यगूढार्थज्ञानवत्त्वम् । इण्ग्रहणेष्विति । नन्विदं न्यूनमम्ग्रहणेपि ग्रहणात् । फलं तु बहुपुमङ्कहित्यादौ पुमः खय्यमिति रुत्वम् । गवित्ययमाहेत्यादिवदपदान्तत्वात्ककारादेर्न जश्त्वमिति चेन्न । सुट्तिथोरित्यादाविकाराद्युच्चारणेन शास्त्राबोधिताजव्यवहितहल्समुदायस्यासाधुत्वबोधनात् । अत एवोच्चैरुदात्त इति सूत्रे भाष्यम् । न पुनरन्तरेणाचं व्यञ्जनस्योच्चारणमपि भवतीति । स्कोरित्यादिस्तु सौत्रः प्रयोगः । अत एवाटि हकारप्रयोजनकथनावसरे भाष्ये शश्छोटीत्युपन्यस्य तदुदाहरणं नोपन्यस्तम् । हकारपरशकारासम्भवेन शश्छोटीति प्रसङ्गोच्चारितमिति च कैयटेन व्याख्यातम् । अमि हकारप्रयोजनमिति च भाष्ये नोक्तमिति दिक् ॥

हलू ॥ इदं सूत्रं वलूरलूझलूशलूषु हकारग्रहणार्थम् । रुदिहि स्वपिहि । रुदादिभ्यः सार्वधातुकइति वलादिलक्षण इट् । स्निहित्वा । स्नेहित्वा । रलो व्युपधादिति वा कित्त्वम् । अदाग्धाम् । झलो झलीति सकारलोपः । अलिक्षत् । शल इगुपधादिति क्सः ॥

हलन्त्यम् ॥ सप्तमीति । हलि अन्त्यमिति विग्रहे सप्तमीति योगविभागात्सुप्सुपेति वा समास इति भावः । यद्वा । षष्ठीतत्पुरुषोयम् । स्यादेतत् । हलिसेकदेशस्यैव तन्त्रावृत्त्येकशेषान्यतममस्तु । हस्य लू इति च व्याख्यास्यते । सामीप्यं षष्ठ्यर्थः । यद्वा मास्तु तन्त्रादि । अस्तु समाहारद्वन्द्वो हलू च लू चेति । लकारस्य संयोगान्तलोप इति चेन्नैवम् ॥

---

इदं सूत्रमिति । वलादिप्रत्याहाराश्च रेफेणैव सन्तु । हरन्त्यमित्यत्रान्योन्याश्रयपरिहारस्तु रन्त्यं हरितिन्यासेनावृत्त्या हप्रत्याहारबोधकसूत्रसमुदायान्त्यमिदित्यर्थेन वा सुकर इति भावः । ग्रहणार्थमिति । शषसहरित्येव तु नोक्तम् । खरि हकारग्रहणापत्तौ हरिर्हरतीत्यादौ विसर्गापत्तेः । सप्तमीति । अधिकरणकारकस्य कर्त्राद्यन्वयद्वारा क्रियान्वयादस्ति सामर्थ्यमिति भावः । अस्य योगविभागस्य भाष्ये ऽदर्शनादाह । सुप्सुपेतीति । अनेनापि साधनस्यागतिकगतित्वादाह । यद्वेति । हलो हलिति सूत्रस्यान्त्यमिति विग्रह इति भावः । षष्ठीस्थानइत्यस्य चोदुपधाया गोह इत्यादाविव गुणानां च परार्थत्वादिति न्यायेन वा ऽप्रवृत्तिरिति बोध्यम् । तन्त्रावृत्त्येकशेषान्यतममस्त्विति । यद्यपीदृशे विषये उच्चारयितुस्तन्त्रैकशेषान्यतरेणोच्चारणं बोद्धुस्त्वावृत्त्या बोध इत्येवानुभवसिद्धं तथापि व्यवस्थितैवान्यतमसत्तानेन बोध्यतइति न दोषः । एकशेषश्च प्रत्याख्यातो ऽसहविवक्षायामपि शास्त्रमात्रप्रक्रियोपयोगीत्याशयेन पृथगुक्तः । सामीप्यं षष्ठ्यर्थ इति । षष्ठीस्थानइत्यस्य गुणानां च परार्थत्वादिति न्यायेनाप्रवृत्तिः । न चेकोगुणवृद्धी इति सूत्रे तच्छेषशब्देन परिभाषयोरपि गुणगुणिभाव उक्त इति वाच्यम् । सार्वधातुकार्धधातुकयोरलोन्त्यस्येकोगुणवृद्धीति सूत्रत्रयस्य लक्ष्यसंस्कारकमहावाक्ये विशेष्यविशेषणभावमादायैव तच्छेषव्यवहारो न तु गुणगुणिभावेन परस्परापेक्षत्वेन वेति कैयटेन स्पष्टमुक्तेरेतन्मूलकतयैव तत्पक्षासंभवस्य तेनोक्तेश्चेति भावः ॥

आद्ये समासस्य क्लिष्टत्वात् । न हि ब्राह्मणस्य कम्बल इत्यादौ ब्राह्मणसमीपवर्ती अन्यदीयः कम्बलः प्रतीयते । न वा चित्रगुशब्दाच्चित्रगवीणां समीपवर्त्ती वृक्षादिः प्रतीयते । अत एवानन्तरादिषु न समासोनभिधानादिति स्पष्टमाकरे । किं बहुना ब्राह्मणस्य कम्बलश्चित्रा गावोस्येति व्यस्तप्रयोगोपि तत्रानिष्टः ॥

---

क्लिष्टत्वादिति । ब्राह्मणस्य कम्बल इत्यादावसत्यपि प्रकरणादौ स्वस्वामिभावादिप्रतीतिवदनन्तरसमीपादिशब्दप्रयोगमन्तरेण सामीप्याद्यप्रतीतेः तस्य षष्ठ्यर्थत्वाभावात्तत्प्रयोगे त्वसामर्थ्यात् षष्ठीसमासाप्राप्तिरिति मध्यमपदलोपिसमासे सौत्रे वा तत्र समासस्य क्लिष्टत्वमिति भावस्तदेतदाह । न हीत्यादिना तत्रानिष्ट इत्यन्तेन । चित्रगवीणामिति । कुमति चेति णत्वम् । दन्त्यपाठस्तु लेखकप्रमादात् । एवं स्त्रीगवीणामित्येकशेषप्रकरणान्तस्थकैयटप्रयोगेपि बोध्यम् । अस्तेरनन्तरे समीपे वेत्यादि भाष्यं त्वनन्तरादिपदाध्याहारेण तन्निरूपितसंबन्धार्थिका स्थानपदाध्याहारेण तन्निरूपितसंबन्धार्थिका वा षष्ठीत्यभिप्रायकम् । अत एव मतुप्सूत्रे कैयटेन गावोस्य सन्त्यनन्तरा इत्यर्थे मतुप्शङ्कापरभाष्यव्याख्यावसरे आनन्तर्यमस्त्यर्थवत्प्रकृत्यर्थोपाधिरित्युक्तम् । ननु तस्य षष्ठ्यर्थत्वेन प्रत्ययार्थत्वमुक्तम् । भाष्यकृता चासामर्थ्यात्तत्र वृत्त्यभाव उक्तः । षष्ठ्यर्थत्वे तु प्रत्ययार्थत्वात्कासामर्थ्यम् । तस्माद्यत्र षष्ठ्यन्तमात्रप्रयोगे आनन्तर्यादिप्रतीतिस्तत्रानन्तरादिपदाध्याहार एव बोध्यः । तत्रास्तिग्रहणाभावे तस्यान्यफलकत्वे वा सूत्रानुपात्तास्त्यर्थान्तर्भावेण मत्वर्थीयवद्बहुव्रीहिवच्च तथाभूतानन्तर्याद्यर्थान्तर्भावेण चित्रा गावोस्य सन्त्यनन्तरा इत्याद्यर्थे बहुव्रीहिमत्वर्थीयौ न भवतोऽनभिधानादिति मतुप्सूत्रे भाष्ये स्पष्टम् । अनन्तरादेरिदमर्थत्वे तस्येदमिति शैषिकोप्यनभिधानान्नेति तस्येदमित्यत्र भाष्ये । तदुक्तमनन्तरादिषु न समासोनभिधानादिति स्पष्टमाकरइति । तत्र समासग्रहणं तद्धितवृत्तेरप्युपलक्षणम् । अनन्तरादिशब्दैः षष्ठीतत्पुरुषादिस्तु भवत्येव । ग्रामकूपो गङ्गातीरमित्यादौ समीपएवावयवत्वारोपेण समासः । स्पष्टा चेयं रीतिर्मपर्यन्तस्येति सूत्रे कैयटे । किं च हस्य लित्यर्थे हलविलेखनइति धातोर्लस्येत्त्वापत्तिः । न च फलाभावो देवदत्तहलित्यादौ ङित्वसामर्थ्यादभस्यापि टेर्लोपवल्लित्वसामर्थ्यात्प्रत्ययात्पूर्वत्वाभावेपि लित्स्वरस्यैव फलत्वं वक्तुं शक्यमित्यपि बोध्यम् । यद्यपि हलसीरादिति निर्देशेन तस्य नेत्त्वमिति कल्पयितुं शक्यम् । तथापि ज्ञापकस्वीका-

द्वितीयेपि संयोगान्तलोपो दुर्लभो यणः प्रतिषेधारम्भात् । तत्प्रत्याख्यानपक्षेपि झलो झलीत्यतो झल्ग्रहणमपकृष्य संयोगान्तस्य झलो लोपविधानाच्च । किं च, पदार्थबोधं विना वाक्यार्थबोधासंभवेन हल्प्रत्याहारसिद्धेः प्रागेतत्सूत्रार्थाबोधे प्रसक्ते तदुद्धारार्थोयं यत्नः । अस्यां चावस्थायां हल्शब्दार्थाप्रसिद्धौ द्वन्द्व एव दुर्लभः । सहविवक्षाया असंभवात् । तस्माद्यथोक्तमेव न्याय्यम् ॥

---

रापेक्षया सूत्रावृत्तिरेव लघीयसीति दिक् । झलो लोपेति । सौत्रलोपाश्रयणे तु मूलोक्तमेव लघु ॥

असम्भवादिति । न चाद्यन्तौ टकितावित्यादौ यथासङ्ख्यमन्वये ऽपि प्रथमतः साहित्यावच्छिन्ने साहित्यावच्छिन्नान्वयमात्रेण सहविवक्षामाश्रित्य यथा द्वन्द्वसाधुत्वं तथेहापि प्रथमतो लकारो हल्पदवाच्यश्चेदिति सामान्यतो बोधं कल्पितमादाय द्वन्द्वसाधुत्वं, ततो विशेषजिज्ञासायामादिरन्त्येनेत्येकवाक्यतया विशेषतो वाक्यार्थो लक्ष्यसंस्कारकः । किं च, सहविवक्षा सह वक्तुं वक्तुरिच्छा, सा च सूत्रप्रणयनानुपपत्त्या पाणिनेस्ततः पूर्वमपि हल्पदार्थज्ञानादक्षतैव, बोद्धृबोधस्तु क्रमेणैवेति वाच्यम् । आद्यन्तावित्यादौ यथासङ्ख्यसूत्रारम्भसामर्थ्येन तथा साधुत्वाङ्गीकारे ऽप्यन्यप्रकारेण तस्य साधुत्वकल्पने मानाभावात् । किं च, श्रोतॄणां सह बोधो भवत्वितीच्छया सहवक्तुमिच्छाया एव सहविवक्षात्वेन श्रोतॄणामपि सहबोध एवोचितः । तादृशेच्छया तेषां तादृशबोधाजनकशब्दप्रयोगे तु पाणिनेर्भ्रान्तत्वापत्तिः । शुक्लनयनं पश्येत्यादौ तु न दोषः । उभयज्ञत्वेन ज्ञातं प्रत्येव तादृशशब्दप्रयोगात् तेन रूपेण ज्ञानं भ्रमः प्रमा वेत्यन्यदेतत् । किं च, पाणिनेः पूर्वं हल्पदार्थज्ञाने ऽपि तदभिप्रायेण न प्रयोगः । अन्यथा व्याख्यातृपरम्परागत वक्तृतात्पर्यानुपपत्त्या लट् स्मइति सूत्रस्थकैयटोक्तरीत्या लक्षणया तन्त्रान्तरीयप्रथमादिव्यवहारेण प्रथमादिपदानामिव शक्त्यनुमानाद्वा ततः श्रोतॄणां बोधसंभवेनेतरेतराश्रयस्यैवाभावेन तदाशङ्कालश्चेतिवक्तव्यमित्यादिसमाधानपरभाष्यासङ्गत्यापत्तेः । न चैवमजादिव्यवहारस्यापि लक्षणादिनैवोपपत्तावादिरन्त्येनेति सूत्रवैयर्थ्यम् । क्वचिल्लक्षणादिना बोध इति सर्वत्र लक्षणाद्याश्रयणमेवेति नियमाभावात् । नासूया कर्त्तव्या यत्रानुगमः क्रियतइति पङ्क्तिविंशतीति सूत्रे भाष्योक्तेः । तस्मात्करिष्यमाणशक्तिग्रहोपायकपदस्य तदभिप्रायेणाचार्यस्य पूर्वमप्रयोग इत्येव कल्पना ज्यायसी । ध्वनितश्चायमर्थो ना ऽऽज्झलाविति सूत्रे ऽष्टादशानां ग्रहणाभावाय वर्णानामुपदेशस्तावत्, उपदेशोत्तरकालेत्सञ्ज्ञा इत्सञ्ज्ञो-

मध्यगानामिति । आद्यन्ताभ्यामवयवाभ्यामवयवी समुदाय आक्षिप्यते । तस्य च युगपल्लक्ष्ये प्रयोगाभावात्तदवयवेष्वन्तरन्तो सञ्ज्ञा मदूध्यगेषु विश्राम्यतिं । न त्वाद्यन्तयोः । संज्ञास्वरूपान्तर्भावेण तयोः पारार्थ्यनिर्णयादिति भावः । स्वस्य चेति । स्वं रूपमित्यनुवृत्तेः स्वं रूपं चादेरेव गृह्यते नान्त्यस्य । अन्त्येनेत्यप्रधानतृतीयानिर्देशात् । सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात् । आद्योचारणमिति । अग्रप्युपदिश्यते ऽनेनेति करणव्युत्पत्त्या शास्त्रमुपदेश इति भाष्यवृत्त्या-

---

त्तरकालः प्रत्याहारः, प्रत्याहारोत्तरकाला सवर्णसञ्ज्ञा, तदुत्तरमणुदिदिति सवर्णग्राहकमित्येतेन समुदितेनान्यत्र सवर्णानां ग्रहणं भवति न स्वस्मिन्नपि स्वाङ्गइत्येवं वाक्यापरिसमाप्तिप्रतिपादकभाष्येणापि । अन्यथा तत्तच्छास्त्रप्रणयनानुपपत्त्या पाणिनेस्तथाज्ञानस्य पूर्वमपि सत्त्वेनाचार्येण तथा प्रयोगे बोद्धॄणामपि क्रमेण तथा बोधे उपपन्ने किं तेन कृतं स्यात्, कथं वा नाज्झलाविल्यत्राष्टादशादीनां ग्रहणवारणं भाष्योक्तं सङ्गतं स्यादिति विभाव्यतां तदाह । तस्मादिति ॥

आद्यन्ताभ्यामिति । अवयवत्वेन बोधकाद्यन्तशब्दाभ्यामित्यर्थः । तस्य । समुदायस्य । तयोः परार्थ्येति । सञ्ज्ञास्वरूपबोधकतया शक्तिग्रहकालएव तयोः पारार्थ्यनिर्णयादित्यर्थः । परामर्शित्वादिति । वस्तुतो ज्ञापकादिना ऽस्यापि न सञ्ज्ञाकार्यम् आद्यन्तशब्दाभ्यामाद्यन्तघटितसमुदायस्याक्षेपेणान्येषामिव तयोः प्राप्तायाः सञ्ज्ञायाः प्रकारान्तरेणाशक्यवारणत्वात् । स्वशब्दानुवृत्तेश्च न फलम् । भाष्ये ऽपि एतत्फलितार्थकथनमेव स्वस्य च रूपस्येति । सञ्ज्ञास्वरूपत्वं विशिष्टस्यास्तु प्रत्येकं स्वबोध्यत्वं चास्तु को विरोधः । यथा ऽश्व घेरित्यादौ गुणदर्शनेन घिशब्दस्यापि घिसञ्ज्ञाबोध्यत्वं तद्वत् एवमजादिसञ्ज्ञा स्वसञ्ज्ञघटकेकारादिष्विवाकारचकारयोरपि प्राप्नोत्येव । किंच, स्वशब्देन केवलान्त्यपरामर्शासंभवे ऽपि विशिष्टपरामर्शे न बाधकं तत्र समुदाये फलाभावादवयवयोर्विश्रान्तिं प्राप्स्यति । तस्मात् । ज्ञापकादिनैवान्त्यस्य तत्कार्यं वारणीयमित्यलम् । भाष्येति । तत्र हि उपदेशइति किमर्थम् अपः प्रत्यक्षमाख्यानमुपदेशो गुणैः प्रापणमुद्देश इति नासावुपदेश इत्युक्तोपदेशोद्देशयोर्लोकव्यवहारेण संकीर्णत्वमाशङ्क्योपदेशने ऽजनुनासिक इति वार्त्तिककृद्दर्शितन्यासस्य खण्डनायोपदेशइति करणे घञुपदिश्यते ऽनेनेत्युक्तं तच्च शास्त्रं शासनकरणं प्रत्यासत्त्यैतच्छास्त्रीयधात्वागमप्रातिपदिकप्रत्याहारसूत्रप्रत्ययादेशरूपम् ॥

दिषु व्याख्यातं तथापि तत्प्रौढिवादमात्रम् । करणे घञो दुर्लभत्वात् । ल्युटा बाधात् । न च घः । असञ्ज्ञात्वात् । प्रायेण सञ्ज्ञायामिति व्याख्यानस्य क्लिष्टत्वात् । न ह्युपाधेरुपाधिर्भवतीत्यादिना भाष्यकृता ऽवहेलनाच्च । अत एव घापवादो हलश्चेति घञपीह न । बाहुलकं त्वगतिकगतिः । अत एव प्रक्रियन्ते शब्दा याभिरिति करणव्युत्पत्तिरपि परास्ता । तथा च वार्त्तिकम् ॥

अजब्भ्यां स्त्रीखलनाः स्त्रियाः खलनौ विप्रतिषेधेनेति । अतो भाव एव प्रत्ययो न्याय्य इति भावः ॥

---

प्रौढिवादमात्रमिति । वार्त्तिककृदुक्तन्यासीयार्थस्य कथं चित्सूत्रतोपि लाभसम्भवान् न्यासान्तरप्रवृत्तिस्ते वृथैवेति प्रौढ्या बोधयितुमेवं वाद इति भावः । घञ इति । अकर्त्तरि चेत्यत्र सञ्ज्ञायामित्यस्य प्रायिकत्वात्तत्प्राप्तिरिति भावः । बाधादिति । वासरूपविधिस्तु क्त,ल्युट्, तुमुन् खलर्थेषु प्रतिषिद्धः । न च तत्र साहचर्येण भावल्युट एव ग्रहणमिति वाच्यम् । ईषत्पानः सोमो भवतेत्यत्र कर्मणि खल् नेति भाष्यादिप्रामाण्येनात्र साहचर्यानाश्रयणादिति भावः । क्लिष्टत्वादिति । गुणप्रधानसन्निधौ प्रधानस्य विशेषणे साकाङ्क्षत्वे इतरान्वयस्तस्यायुक्त इति क्लेश इति भावस्तदाह । नहीत्यादिना । भाष्यकृतेति । अस्यार्थस्येति शेषः । एवं चोभयप्राप्तौ कर्मणीति नियमान्न कर्त्तरि षष्ठीति बोद्ध्यम् । अवहेलनाच्चेति । चो हेतौ यतोवहेलनमतः क्लिष्टत्वमित्यर्थः । घापवाद इति ल्युडपवादश्चेत्यपि बोद्ध्यम् । तत्रापि सञ्ज्ञायामित्यनुवृत्तेरिति भावः । अगतिकगतिरिति । न च खनो घ चेति घविधानमन्यतोपीत्यर्थमित्याकरे स्पष्टं तेनात्र घे सिद्ध्यतीति वाच्यम् । तस्यापि अगतिकगतित्वात् । भगः पदमित्यादौ यत्र घित्वफलं तत्रैव तत्प्रवृत्तेश्च । पदस्य घञर्थे केन सिद्धेर्नैतदुदाहरणं किं तु क्वाचित्कं वाक्यं तत् । किं चोच्चार्य वर्णानाहोपदिष्टा इमे वर्णा इत्यादिभाष्यादुपदेशशब्दस्योच्चारणार्थत्वस्य निर्णयेन सङ्कीर्णलोकव्यवहारस्य लक्षणया ऽप्युपपत्त्या भावघञि बाधकाभावः । किं चोपदेशशब्दस्य प्रत्ययादिपरत्वे तस्यैव हलन्त्यमित्यत्रान्वयेन यत्किंचित्समुदायान्त्यस्य वारणसंभवे तदर्थमन्त्यग्रहणसामर्थ्यादिवर्णनक्लेशो भाष्यकृतो व्यर्थः स्यादिति बोद्ध्यम् । उदेशश्च प्रातिपदिकानां नोपदेश इत्यादेच उपदेशे, इति सूत्रे च भाष्ये भावघञन्तस्यैव तस्याङ्गीकाराच्चेति दिक् ॥

यत्तु धातुसूत्रेत्यादि पठन्ति । यच्च व्याचक्षते । करणव्युत्पत्त्या पूर्वोक्तोपाचानामुपदेशत्वम् । कर्मव्युत्पत्त्या त्वागमादीनाम् । उणादिलिङ्गानुशासनयोरपि सूत्रत्वात्सिद्धे पृथगुपादानं गोबलीवर्दन्यायेन । एवं गणत्वादेव सिद्धे धातोरपीत्यादि । अत्रेदं वक्तव्यम् । किमेषामुपदेशसञ्ज्ञा, उत योगमात्रम् । नाद्यः । संज्ञायाः शास्त्रकारैरनुक्तेः । असंज्ञात्वाद् घप्रत्ययो नेति भाष्योक्तेश्च । अस्मदादिकृतसञ्ज्ञायाः शास्त्रव्यवस्थापकत्वे ऽतिप्रसङ्गाच्च । आमो ऽमित्त्वमदन्तत्वादिति स्वपरग्रन्थविरोधाच्च । न ह्युत्सृष्टानुबन्धस्यामो न प्रसयत्वं येन मित्त्वं न भवेत् । किं चैवं प्रत्ययविधौ पञ्चम्याः षष्ठीप्रकल्पकत्वे सनः सनेवादेशोऽस्त्वित्याशङ्क्योपदेशाभावादित्सञ्ज्ञा न स्यादिति भाष्यकैयटोक्तं व्याकुप्येत । किं च, न धातुलोप इति सूत्रे धातुग्रहणं किं लूञ् लविता पूञ् पवितेति भाष्यमुपदेश एवानुबन्धलोपे कृते ततो धातुसञ्ज्ञेत्येवंपरः कैयटग्रन्थश्च विरुध्येत । अपि च, घ्वसोरेद्धाविति सूत्रे लोपश्श्चेति द्विशकारको निर्देशः । द्वितीयः शकार इदिति अलोन्त्यसूत्रस्थ-

---

धातुसूत्रेत्यादीति । धातुसूत्रगणोणादिवाक्यलिङ्गानुशासनम् । आगमप्रत्ययादेशाउपदेशाः प्रकीर्तिता इतीत्यर्थ. । उपदेशत्वमिति । उपदेशशब्दव्यवहार इत्यर्थः । धातोरपीति । प्रत्ययेभ्यउणादेरपीत्यपिशब्दार्थः । वाक्यशब्देन वार्तिकं शीङ्, लण् चोरट्, उण्, आचारेवगल्भ, घुट्, अण् अनङित्युदाहरणानि । उपदेशसञ्ज्ञेति । उपदेशपदं योगरूढमेष्विति भावः । ननु सञ्ज्ञाशब्देन व्यवहार एवाभिमतो ऽत आह । आम इत्यादि । न चाकारोच्चारणं व्यर्थम् । तेनास्मत्पक्षज्ञापनस्यैवौचित्यादिति भावः । आदिना यकारादी चुञ्चुप्चणपावित्यादिसंग्रहः । उपदेशाभात्वादिति । आदेशस्योपदेशाभावादित्यर्थः । ततो धातुसञ्ज्ञेति । लूशब्द एव धातुसञ्ज्ञः केवलमसौ ञित्कार्यं लभतइति भावः नन्वत्र सूत्रसाहचर्याद्धात्वागमप्रत्ययादिशब्देन तद्बोधकपाणिन्यादिपठितानुपूर्वीकाणां ग्रहणम् । तेषां धात्वादिव्यवहारस्तु भाविसञ्ज्ञाविषयघटितत्वेन धातुपाठ इत्यादिव्यवहारवदिति चेन्न । आद्योच्चारणविषयाणामित्येव सिद्धे एतस्यानुपयोगात् । अत एव वारुचेराह । अपि चेति ॥

अलोन्त्यसूत्रेति । उपधासञ्ज्ञासूत्रेत्यर्थः । विरुध्येतेति । तत्र हि लोप-

भाष्यकैयटादिकमपि विरुद्ध्येत । न द्वितीयः । योगस्यैव पुरस्कारे परिगणनस्य व्यर्थत्वात् । धात्वादिषु करणव्युत्पत्तिरागमादिषु नेति वैषम्यस्य दुरुपपादत्वाच्च । उपदेशताप्रयोजकधातुत्वादिरूपोपादुध्यव-च्छिन्नसमुदायान्त्यं हलिदित्यर्थ इति । स्वग्रन्थविरोधाच्च । पक्षद्वये ऽपि लिङ्गानुशासनस्य प्रकृतानुपयोगात् । लोपश्चेति शकारस्यासंग्रहाच्च । आदेच उपदेशे,उपदेशेत्वत, इत्यादावाद्योच्चारणस्यैवोपदेशपदार्थतायाः सर्वसंमतत्वाच्चेति दिक् ॥

उपदेशे ऽजनुनासिक इत् ॥ यद्यप्यत्रोपजीव्यत्वादनुनासिकसञ्ज्ञा प्रथमं वक्तुमुचिता तथापि नासिकामनुगत इति योगाश्रयणेनैव ग-

---

शिति भिन्नं पदं शिति च । पूर्वस्य श्चुत्वेन शः । असंदेहाय झलपरसंयोगादित्वे ऽपि स्कोरित्यस्य न प्रवृत्तिः झलां जशित्यादौ जश्त्वस्येव । शकारस्य धात्वा-द्यन्तत्वाभावः स्पष्ट एवेति भावः । किं च, नमोवरिवश्चित्रङ इत्यस्यासंग्र-होत्र पक्षे इत्यपि बोद्ध्यम् । एवंतस्य रूढिरित्युक्तेः परिगणनताया एव लाभात् । योगस्यैवेति । न तु रूढेरित्यर्थः । परिगणनस्येति । धात्वादिग-णनस्येत्यर्थः । वैषम्येति । भाष्यरीत्या करणव्युत्पत्त्यैव सर्वसंग्रहादिति भावः । उपदेशताप्रयोजकेति । योगमात्रस्वीकारे उपदेशता उपदेशकर-णता न हि तत्प्रयोजकं धातुत्वादि भवतीति तद्विरोधः । सञ्ज्ञात्वे तु उपदेशता उपदेशशब्दत्वम् । उपदेशशब्दस्य शब्दपरत्वात् । तदवच्छि-न्नस्य प्रयोजकं तु रूढ्यर्थतावच्छेदकतया धातुत्वादि वक्तुं शक्यमिति भावः । शकारस्येति । न ह्यनेन किंचिदुपदिश्यतइति भावः । ननूपदिश्यते ज्ञाप्यते ऽनेनेति तदर्थः । धात्वादिभिर्हि प्रयोगो ज्ञाप्यते तद्वदनेनापि श-कारेण सर्वादेशत्वं ज्ञाप्यते इत्यरुचेराह । आदेच इति सर्वेति । भाष्यका-रादीत्यर्थः । यत्र तु करणव्युत्पत्त्यैवार्थसंगतिस्तत्रागत्या ऽस्तु कृत्यल्युट इति बाहुलकात् ल्युडभावः । यथा यन्निमित्तवैकल्यप्रयुक्तोपदेशाप्रवृत्तावित्या-दाविति दिक् ॥

नासिकामनुगत इति । नासिकामभिहत्य वायुना ऽभिव्यञ्जित इत्यर्थः । प्रातिशाख्यशिक्षादौ लोके च तद्व्यवहारस्य तथैवोपपादनमावश्यकमिति तात्पर्यम् ॥

तार्थत्वादनुनासिकसञ्ज्ञासूत्रं मन्दप्रयोजनमिति ध्वनयितुं नेहोपन्यस्तम्। उपदेशे किम्। अभ्रआँ अपः। यद्यपीह उञ ऊँ इत्यत्रैव विधानसामर्थ्यान्नेत्त्वमिति सुवचम्। तथाप्युत्तरार्थमवश्यं कर्त्तव्यमुपदेशग्रहणं स्पष्टप्रतिपत्तयइहैव कृतम्। अच् किम्। मनिनो मकारस्य मा भूत्। प्रतिज्ञायतइति प्रतिज्ञा। आतश्चोपसर्गइति कर्मण्यङ्। प्रतिज्ञा आनुनासिक्यं येषामिति विग्रहः। एवं च प्रतिज्ञासमधिगम्ये प्रतिज्ञाशब्दस्य लक्षणेति क्लिष्टं व्याख्यानं नाश्रयणीयम्। पाणिन्युपज्ञं व्याकरणमित्यादिष्विव लक्षणां विनैव निर्वाहात्। यद्यपि सूत्रकारकृतोनुनासिकपाठ इदानीं परिभ्रष्टस्तथापि वृत्तिकारादिव्यवहारबलेन यथाकार्यं प्राक्

---

अत एव मुखग्रहणप्रत्याख्यानभाष्यध्वनितो यमानुस्वारयोरनुनासिकव्यवहारः सूत्रमते संगच्छते। यरोनुनासिकइत्यादौ स्वरूपग्रहणाभावस्तु पशुरपत्यमित्यादिवदिति ध्येयम्। मन्दप्रयोजनमिति। मन्देषु प्रयोजनमस्येति बहुव्रीहिः। एवंविधयोग, लोक, प्रातिशाख्याद्यनभिज्ञं प्रति सप्रयोजनमित्यर्थः। अभ्रआँ अप् इति। अत्रेत्सञ्ज्ञायां लोपः स्यादिति भावः। विधानेति। इदिति वक्तव्ये अनुनासिकविधानसामर्थ्यादित्यर्थः। नेत्त्वमिति। तत्फललोपस्य सामर्थ्यादभावे इत्त्वमपि फलाभावान्नेत्यर्थः। नन्वभ्रआं अटित इत्यत्रानेकान्ता अनुबन्धा इति पक्षे आदितश्चेतीट्प्रतिषेधः फलम्। न च लोपाभावे इदिति महासञ्ज्ञाकरणात्सञ्ज्ञापि नेति वाच्यम्। महासञ्ज्ञयैव लोपसिद्ध्या तस्य लोप इत्यस्य वैयर्थ्यापत्तेः। इक इत्यादौ ककारादिश्रवणानापत्तेश्चेति चेन्न। अनुबन्धानामेकान्तत्वमेवेति मुख्यपक्षे दोषाभाव इत्याशयात्। तदा हि मुख्ये ऽवयविन्यन्यपदार्थे बहुव्रीहिः। न चायमाकारोट्धातोरवयव इत्यदोषात्। प्रतिज्ञेति। प्रतिज्ञानविषय इत्यर्थः। प्रतिज्ञाशब्दस्येति। भावाङन्तस्येत्यर्थः। क्लिष्टेति। शक्तिग्राहकव्याकरणसत्त्वाच्छक्त्यैव तदर्थबोधसंभवे लक्षणाश्रयणं क्लेश इति भावः। लक्षणां विनैवेति। अत्र लक्षणया व्याख्यानं कुर्वतापि तत्र लक्षणां विना मदुक्तरीत्यैव व्याख्यातमेवं च पूर्वापरविरोधस्तस्येति भावः। न चोभयोर्विधाने ऽपि लाघवाद्भावे शक्तिः कर्मणि लक्षणा अनुशासनमपि लाक्षणिकार्थानुशासनमेवेति वाच्यम्। लः कर्मणीत्यादीनामपि तथात्वापत्तौ तिङां कर्त्रादौ शक्तिरिति सिद्धान्तासङ्गत्यापत्तेः। व्याकरणस्याभियुक्तोक्तशक्तिग्राहकत्वस्य भङ्गापत्तेश्च ॥

स्थित इत्यनुमीयतइति भावः । ननु रलयोरिति न्यूनम् । टकारस्यापि मध्यगत्वादित्यत आह । प्रत्याहारेष्विति । व्यवह्रियन्तइति । प्रत्याह्रियन्ते संक्षिप्यन्ते वर्णा यत्रेति बाहुलकादधिकरणे घञ् । यद्यपि योगमात्रमकारादिसञ्ज्ञास्वतिप्रसक्तं तथापि योगरूढिरिति भावः । प्रत्याहाराश्चैकचत्वारिंशदिति प्राञ्चः । चतुर्दशसूत्रीस्थैर्हल्भिरिद्भिः कृता अष्टाध्याय्यां व्यवहृता एकचत्वारिंशदिति तस्यार्थः । तेन सुप्तिङादीनां रप्रत्याहारस्य चयो द्वितीया इति वार्तिकस्थचयप्रत्याहारस्य चाधिक्ये ऽप्यदोषः । यत्तु ञमन्ताड्ड इति, यमिर्ञमन्तेष्वनिडेक इष्यतइति, च ञम् वार्तिककृता व्यवहृत इत्याहुः तद्भ्रमसाभिधानम् । आद्यस्योणादिसूत्रत्वाद् द्वितीयस्य व्याघ्रभूतिकारिकास्थत्वादित्यास्तां तावद् । एष च संख्यानियमो नातीवोपयुज्यतइत्युपेक्षितः ॥

ऊकालोच् ॥ ह्रस्वदीर्घप्लुत इति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । वां काल इवेति । फलितार्थकथनमिदम् । विग्रहस्तु वः कालो यस्येति बोध्यः । ऊशब्देन स्वोच्चारणकालो लक्ष्यते । आ यइति । निपाता आद्युदात्ता इति आकार उदात्तः ॥

---

टकारस्यापीति । अत्र यद्वक्तव्यं तदन्यत्रोक्तम् । बाहुकादिति । भावघञन्तादर्शआद्यजित्यपि बाहुलकादविशिष्टमिति भावः । एकचत्वारिंशदिति । एकस्मान् ङ, ञ, ण, व, टा, द्वाभ्यां षस्त्रिभ्य एव क, या, माः, स्युः । ञैयौ चयौ चतुर्भ्यो रः पञ्चभ्यः शलौ षड्भ्य इति तदुक्तेरिति भावः ॥

सौत्रं पुंस्त्वमिति । यद्यपि इतरेतरयोगे ऽपि सौत्रमेकवचनं वक्तुं शक्यं तथापि लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्येति तत्रतत्र वार्त्तिकोक्तेर्लिङ्गस्य लौकिकत्वात्तद्व्यत्ययकल्पनमेवोचितं न तु शास्त्रीयवचनव्यत्ययकल्पनमिति भावः । फलितार्थेति । ऊपदेन स्वोच्चारणकालसदृशलक्षणया कालशब्देन समानाधिकरणबहुव्रीहौ तत्फलतीति भावः । वां काल इति तु न विग्रहो व्यधिकरणत्वादत आह । विग्रहस्त्विति काल इति जात्याख्यायामेकवचनम् । स्वोच्चारणकाल इति । स्वोच्चारणकालसदृश इत्यर्थः । सादृश्यमूलके कालयोरभेदाद्ध्यवसाये तु यथाश्रुतमेव साधु ॥

यच्छन्दस्तु फिट्सूत्रेण । अर्वाङ् । अकारोऽनुदात्तः ॥

तस्यादितः ॥ अतन्त्रमिति । उपेयिवानिसत्रोपसर्ग इवाविवक्षितमित्यर्थः । ननु तत्र ईयिवांसमतिस्रिध इत्यादिप्रयोगदर्शनादविवक्षाऽस्तु । इह त्वविवक्षायां प्रमाणं किमिति चेल्लक्ष्यदर्शनं प्रातिशाख्यादिकं चेति गृहाण । तथा हि । ये ऽरा इत्यत्र एकारः । तनूनपाच्छचीपतिमित्यत्र पदपाठे ऊदीतौ चार्धोदात्तौ इति सकलबह्वृचप्रसिद्धम् । तनूनपाच्छचीपतिशब्दयोरुभे वनस्पत्यादिषु युगपदिति पूर्वोत्तरपदयोराद्युदात्तत्वे कृते अनुदात्तं पदमेकवर्जमिति शेषनिघातः । पूर्वपदभूतयोस्तनूशची एतयोरन्त्यस्य पाक्षिकं स्वरितत्वं प्रातिशाख्ये उक्तम् । जात्यवद्वा तथा वान्तौ तनूशचीति पूर्वयोरिति । तथा स्वरितार्द्धस्योदात्तत्वे प्रातिशाख्यमपि । एकाक्षरसमावेशे पूर्वयोः स्वरितः स्वरः । तस्योदात्ततरोदात्तादर्धमात्रार्द्धमेव वा १ अनुदात्तः परः शेषः स उदात्तश्रुतिर्न चेत् । उदात्तं वोच्यते किं चित्स्वरितं वाक्षरं परमिति । अस्यार्थः । पूर्वयोरुदात्तानुदात्तत्वयोरेकत्र समावेशे सति स्वरितो बोद्धव्यः ।

---

फिट्सूत्रेणेति । अन्तोदात्त । इत्यर्थः । जसः सुप्त्वादनुदात्तत्वम् । एकादेश उदात्तेनेत्येकार उदात्त इति भावः । अनुदात्त इति । फिट्स्वरेणान्तस्योदात्तत्वे शेषनिघातेनेति भावः । अभिमुखवाच्यव्युत्पन्नं प्रातिपदिकमर्वाङिति । अविवक्षितमित्यर्थ इति । इदं च वक्ष्यमाणं प्रातिशाख्यं यच्छाखायां तच्छाखास्थवैदिकोदाहरणविषयम् । तनूनपाच्छचीपतिशब्दयोरिति । अस्य यद्यपीत्यादिः । शेषनिघात इति । अस्य तथापीति शेषः । तेनोदीतौ अनुदात्तौ प्राप्नुत इति भावः । जात्यवद्वेति । पूर्वपदभूतयोस्तनूशचीशब्दयोरन्त्यौ जात्यवदिति । अतो ऽन्यत्स्वरितं स्वारं जात्यमाचक्षते पदे, इति लक्षितो जात्यः । उदात्तस्वरितपूर्वस्वरितादन्य एकपदे स्थितः स्वरितो जात्य इति तदर्थः । तेन तुल्यं तद्वत् अस्यान्त उदात्तश्रुतिक इत्यर्थः । तथा वा, असंहितवद्वा, संहितवद्वेत्यर्थः । पद्यार्दीस्तु द्व्युदात्तानामसंहितवदुत्तरानित्युत्तरमस्य पाठात् । असंहितवदित्यनेन केवलमनुदात्तत्वम् । संहितवदित्यनेनार्धोदात्तस्वरितत्वमिति तद्भाष्ये स्पष्टम् । तथेति । लक्ष्यदर्शनवत्प्रातिशाख्यमपि प्रमाणमस्तीत्यर्थः ॥

तस्य स्वरितस्य स्वतन्त्रोदात्तापेक्षयोदात्ततरा ऽर्द्धमात्रा बोद्धयेति । क्व वोश्वा इत्यादि ह्रस्वाभिप्रायम् । अर्द्धं वेति दीर्घाभिप्रायम् । अनेनैव ह्रस्वस्यापि संग्रहाद्व्यापकत्वादिदमेवादर्तव्यमिति सूचयितुमेवकारः । अनुदात्त इत्यादि परिशेषसिद्धार्थकथनं, स शेष उदात्तश्रुतिः स्यात् । किमविशेषेण । नेत्याह । न चेदित्यादि । उदात्तस्वरितपरं विहायेस र्थः । शाकल्योप्याह । अप्राकृतस्तु यः स्वारः स्वरितोदात्तपूर्वगः । उदादायार्द्धमस्याथ शिष्टं निघ्नन्ति कम्पितमिति । उदादाय उदात्तं कृत्वा । अर्द्धह्रस्वशब्देन अर्द्धमात्रा लक्ष्यतइति हरदत्तादिग्रन्थास्तु मतान्तरपरतया कथं चिन्नेयाः । क्वेति । किमोत् तित्स्वरितम् । व इति । अनुदात्तं सर्वमपादादावित्यधिकारादनुदात्तम् । अश्वा इति । अशेः क्वनि नित्स्वरेणाद्युदात्तं संहितायां त्वेकादेश उदात्तेनोदात्त इत्योकार उदात्तः । ये अरा इति । द्वयमपि फिट्सूत्रेणान्तोदात्तम् । एकादेशस्तु पक्षे स्वरितः । स्वरितो वा ऽनुदात्ते पदादावित्युक्तेः ॥

मुखं च नासिका चेति विग्रहे प्राण्यङ्गत्वादेकवद्भावे मुखनासिकमिति स्यादत आह । मुखसहितेति ॥

---

स्वतन्त्रोदात्तापेक्षयेति । श्लोके उदात्तादिति स्वतन्त्रोदात्तादित्यर्थकमिति भावः । एवकार इति । तच्छाखायां दीर्घादिष्वपि समांशोदात्तकस्वरितस्यैव पाठादिति भावः । एतेनैतौ पक्षौ वैकल्पिकावित्यपास्तं, वाशब्दस्तु पादपूरणायेति बोद्ध्यम । अप्राकृत इति । स्वरितविशेष इत्यर्थः । स्वार इति । स्वर एव स्वारः स्वार्थे ऽण् । स्वरितोदात्ताभ्यां पूर्ववर्णग इत्यर्थः । लक्ष्यते इति । तदुक्तं भाष्ये । अर्द्धह्रस्वशब्दोर्द्धमात्रायां रूढ इति । हरिप्याह । प्रमाणमेव ह्रस्वादावमुपात्तं प्रतीयतइति । अनुपात्तमपि अर्द्धमात्रारूपं प्रमाणमेवोपलक्ष्यतइत्यर्थं तस्य हेलाराज आह । एवं च लोके ऽन्यशाखासु च दीर्घादिष्वप्यर्धमात्रैवोदात्तेति भावः । मतान्तरेति । प्रातिशाख्योक्तमतापेक्षयेतरवेदलोकसाधारणमतान्तरेत्यर्थः । कथं चिदिति । लक्ष्यते इत्यंशपरमिदं भाष्यतो रूढिशक्तेरेव प्रतीतेरिति भावः । इत्युक्तेरिति । नोदात्तस्वरितोदयमिति निषेधस्तु उदात्तादनुदात्तस्येत्यस्यैवानन्तरस्येति स्यादिति भावः ॥

तुल्यास्य ॥ आस्ये भवमास्यं शरीरावयवाद्यत्, इत्यभिप्रेत्याह । ताल्वादीति । आभ्यन्तरेति । एतच्च प्रशब्दबलाल्लभ्यते । तुल्यास्यं किम् । तप्तां अत्र पकारस्य तकारे परे झरो झरीति लोपो माभूत् । प्रयत्नग्रहणं किम् । वाक् श्चोतति । शस्य लोपो न । ञमङणनाना-मिति । नासिका चेति चकारेण स्वस्ववर्गानुकूलं तात्वादि समुच्चीयते । अनुस्वारोत्तमा अनुनासिका इति तैत्तिरीयाणां प्रातिशाख्यम् । यमानुस्वारनासिक्यानां नासिका, अनुनासिकाश्चोत्तमा इति कात्यायन-प्रातिशाख्यम् । वर्गोत्तमा ञमङणना अनुनासिका भवन्ति चशब्दा-त्स्वस्थानाद्यपरित्यागेन नासिका स्थानं द्वितीयमेषामित्यर्थ इति त-द्भाष्यं च । एदैतोरित्यादौ तपरत्वमसंदेहार्थं न तु तत्कालग्रहणार्थम् । तेन प्लुतस्यापि संग्रहः ॥

पूर्वत्रासिद्धम् ॥ यद्ययं स्वतन्त्रो विधिः स्यात् तर्हि त्रिपादी पूर्वं प्र-त्यसिद्धा इत्येव लभ्येत त्रैपादिकं तु पूर्वं प्रति परं नासिद्धं स्यादत आह । अधिकारोयमिति । यद्यत्र कार्यासिद्धत्वमिष्येत तर्हि पूर्वत्रा-सिद्धमिति मनोरथ इत्यादावुत्वं न स्यात् । परत्वाद्रो रीत्यस्य प्रसङ्गात् ।

---

आस्यशब्देन कथं तदवयवताल्वादिग्रहणमत आह । आस्ये भवमिति । प्रशब्दबलादिति । प्रकृष्टो यत्नः प्रयत्नः प्रकर्षश्च वर्णोत्पत्त्यव्यवहितप्राक्कालि-कत्वरूप इति भावः । चकारेणेति । अत्र यथा नासिकायाः स्थानत्वं तथा ऽन्यत्र निरूपितम् । न तु तत्कालेति । एषां शिक्षाद्युक्तार्थानुवादत्वेनात्र शास्त्रप्र-वृत्त्यभावादिति भावः ॥

नासिद्धं स्यादिति । ततश्च गोधुङ्मानित्यादौ घत्वजश्त्वानुनासिके-षु भष्भावो न स्यात् । न चातिदेशान्तरवदस्यापि त्रिपाद्यां प्रवृत्तौ न दोषः । सपादसप्ताध्याय्यामपि पूर्वं प्रति परासिद्धत्वापत्तेः । मध्ये पाठस्य विप्रतिषेधसूत्रस्य च सामर्थ्याश्रयणे तु विनिगमनाविरहात्त्रिपाद्यामपि अप्रवृत्त्यापत्तिरिति भावः । रो रीत्यस्य प्रसङ्गादिति । सिद्धे ऽसिद्धत्वारोपात् सूत्रोदाहरणसंपत्त्यै परत्वाल्लक्ष्ये कार्यप्रवृत्तेरावश्यकतया परत्वात् त्रैपादिके कार्ये जाते तत्राभावप्रतियोगित्वारोपे ऽपि देवदत्तहन्तृहतन्यायेन स्थानिभूतरोर-भावाद्वृद्धि चेत्यस्याप्राप्तिरिति भावः ॥

तथा च पूर्वत्रासिद्धे नास्ति विप्रतिषेधोऽभावादुत्तरस्येति सिद्धान्तो व्याकुप्येत। अमू, अमी, इत्यादि च न सिद्ध्येदत आह। त्रिपादीति। परं शास्त्रमिति च। एतेन त्रिपाद्यां विहितं कार्यमसिद्धमित्यादि माचां ग्रन्थः परास्तः। विवृण्वते कण्ठमिति। विवार एषां प्रयत्न इति भावः। वर्गयमगा इति। वर्गगा यमगाश्चेत्यर्थः। कादय इति। लोकप्रसिद्धपा-

---

स्पष्टं चेदं प्रकृतसूत्रे अचः परस्मिन्नित्यत्र षत्वतुकोरित्यत्र च भाष्ये। तथा चेति। शास्त्रस्य तद्बोध्यकार्यस्य च शास्त्रजज्ञानवेलायामसिद्धत्वाभावे रो रीत्यादेः प्रसङ्गे चेत्यर्थः। व्याकुप्येतेति। त्वया विप्रतिषेधशास्त्रप्रवृत्तौ निमित्तस्य त्रैपादिकस्य शास्त्रजबोधविषयकार्यस्य शास्त्रस्य वाऽसिद्धता वक्तुमशक्या किं तु लक्ष्ये जातस्य तस्य प्रवर्तमानसपादसप्ताध्यायीस्थकार्यदृष्ट्या ऽसिद्धत्वं वाच्यम्। एवं च विप्रतिषेधाभावोपपादकहेतोरसिद्धिरिति भावः। न च ममापि पूर्वपरपदयोः पूर्वपरशास्त्रजन्यबोधविषयकार्यलक्षणया शास्त्रएव कार्यासिद्धत्वमिति वाच्यम्। लक्षणायां मानाभावात्फलाभावाद्गौरवाच्च। ननु मनोरथे दर्शनाभावरूपे लोपे ऽभावारोपस्य दर्शनारोपरूपत्वेन न दोषो ऽभावाभावस्य प्रतियोगिरूपत्वादित्यत आह। अमू इत्यादि। अद अ औ, अद अ अस्, इत्यवस्थायां जातास्योत्वस्य सपादसप्ताध्यायीस्थकार्यदृष्ट्या ऽसिद्धत्वे ऽपि पूर्वरीत्या ऽकाराभावेन पररूपाद्यनापत्तिः। मुत्वस्यासिद्धत्वनिषेधसामर्थ्यादेतद्विषये उक्तन्यायाप्रवृत्तिरिति च, तेन शास्त्रासिद्धत्वमेव ज्ञापयितुं युक्तम्। एवं शीभावात्पूर्वमदसोसेरिति मुत्वे दात्परैकाराभावेनैत ईदिति सूत्रमपि व्यर्थं सदत्रैव ज्ञापकमस्तु। न च तौ सदित्यादिनिर्देशैर्देवदत्तहन्तृहतन्यायो ऽनित्य इति वाच्यम्। हते देवदत्ते तद्धन्तरि हते ऽपि नोन्यज्जनं हतत्वारोपे तु सुतराम्। हन्तुमुद्यतस्य हनने तूज्जीवनमस्त्येवेति न्यायशरीरम्। तावित्यादौ वृद्धिहन्तुः पूर्वसवर्णदीर्घस्य हननोद्यमसजातीयं प्रसङ्गमात्रं न तु हननस्थानीया लक्ष्ये प्रवृत्तिरिति न तत्रास्य न्यायस्य विषय इति तेनास्यानित्यत्वबोधनासंभवात्। स्पष्टं चेदं स्वादिष्वसर्वेति सूत्रे कैयटे। प्रकृते तु निरधिष्ठानारोपासंभवेन हननसजातीयप्रयोगे कार्यप्रवर्तनमावश्यकमेवेत्यन्यत्र विस्तरः। परास्त इति। विहितं कार्यमित्यध्याहारे गौरवाच्च। किं च, त्रिपादी शास्त्रं तद्धि विधाने करणं न त्वधिकरणम्। त्रिपाद्यां विद्यमानेन शास्त्रेण विहितं कार्यमिति व्याख्याने त्वत्यन्तं क्लिष्टतेत्यपि बोध्यम्। लोकप्रसिद्धेति। तैभिश्च मदुध्यमैर्वर्णैरिति भाष्यप-

ठापेक्षमिदम् । चतुर्दशसूत्र्यां मावसानत्वायोगात् । अर्द्धविसर्गेति । सादृश्यमुच्चारणे लेखने च बोद्ध्यम् । ऋऌवर्णयोरिति । आ च आ च रलौ तौ च तौ वर्णौ चेति विग्रहः । उश्च उल् च ऋलोः । तयोर्वर्णयोरिति वा । प्रथमान्तेन परिनिष्ठितविभक्त्या वा विग्रह इति सिद्धान्तात् । ऋत्यक इति प्रकृतिभावः ॥

नाज्झलौ ॥ आकारसहित इति । अत्र च कालसमयवेलास्विसादिनिर्देशाः प्रश्लेषे लिङ्गम् । न चैवमपि यियासो, इत्यादौ गुरोरनृत इति प्लुतादाकारात्परस्य सनः सस्य षत्वं स्यादेवेति वाच्यम् । आश्च, आश्चेति द्वन्द्वे सवर्णदीर्घेण दीर्घात्परत्र प्लुतोपि प्रश्लिष्यत इति व्याख्यानात् । यणादिकमिति । शीतलशब्दे सवर्णदीर्घ आदि-

---

र्यालोचनया क, ख, ग, घ, ङ, त्यादीनामप्यनादित्वमिति भावः । उच्चारणेति । पादमात्रिकाविमाविति भावः । लेखने चेति । अर्द्धवृत्तद्वयात्मकलिपित्वादिति भावः । रलाविति । ऋऌऔ इति स्थिते ऋत्यक इति प्रकृतिभावेन दीर्घाभावे गुणे यणि च रलावित्यस्य सिद्धिः । उश्च उल् च ऋलोरिति पाठः । रलोरिति पाठे आगन्तुना ऽकारेण निर्देश इति बोद्ध्यम् । तयोर्वर्णयोरिति । पूरणगुणेति निषेधस्तु षष्ठीसमासस्य न तु कर्मधारयस्य बहुलग्रहणेन तदभावो भाष्योदाहृतविषयएव नान्यत्रेति भावः । प्रथमान्तेनेति । प्रथमोपस्थितत्वादिति भावः । अयं पक्षोनेकमन्यपदार्थे इति सूत्रे भाष्ये । परिनिष्ठितेति । अत्र चैकविभक्ति चापूर्वनिपातइति ज्ञापकम् । अन्यथा मालामतिक्रान्त इति विग्रहे ऽतिपदस्यापि नियतविभक्त्यन्तत्वेनैकविभक्तीत्यस्य व्यावर्त्यालाभः । एकस्यानियतविभक्तित्वे हि तद्वारणायैकविभक्तीति सार्थकं परिनिष्ठितविभक्त्या समासे त्वतिक्रान्तमतिक्रान्तेनेत्यादिक्रमेण तस्यानियतविभक्तिकत्वं स्पष्टमेव । अत एव तत्पुरुषे तुल्यार्थेति सूत्रे भाष्ये परमे कारके परमेण कारकेणेत्यादावतिप्रसङ्गमाशङ्क्य प्रतिपदोक्तपरिभाषया समाहितमिति भावः । व्याख्यानादिति । एवं व्याख्याने मानं तु प्रयत्नभेदेन नाज्झलावित्येतत्प्रत्याख्यानपरं भाष्यं तत् ध्वनयन्वक्ष्यति सूत्रं मास्त्विति भाष्ये स्थितमिति । शीतलशब्दे इति । शस्य ईकारे परे दधीतीकारस्य शकारे परे चेत्यर्थः । न च श्रीकः शकारोच्चारणेन तच्छकारस्येकारे न दीर्घ इति वाच्यम् । शीतलशब्दे

शब्दार्थः । अत्रेति । अत्रैवेत्यर्थः । यद्यपीति । ग्रहणकशास्त्रस्याद्याप्यनिष्पत्तेरिति भावः ॥

हो ढ इत्युपलक्षणं रमास्विवत्यत्र षत्वं, वागाशीरित्यत्र झयो ह इत्याकारस्य घकारः, दासीष्ट्रेत्यादौ दादेरिति घत्वं, च नेति बोद्धव्यम् । यदि तु विवृतमूष्मणामित्यत्र ईषदित्यनुवर्त्य स्वराणां चेत्यत्र निवर्त्य प्रयत्नभेदो व्याख्यायते तदा नाज्झलाविति सूत्रं मास्त्विति भाष्ये

---

शीङो भावात् । किं तु श्याधातोः के द्रवमूर्तिस्पर्शयोः श्य इत्यनेन संप्रसारणे श्योऽस्पर्शइत्युक्तेर्नत्वाभावे च निष्पन्नाच्छीतशब्दात्सिध्मादित्वाल्लचि शीतलशब्द इत्यदोषात् । शीतलशब्दो हि सिध्मादिषु गणरत्ने वृत्तौ च पठ्यते । किं च तेनापूर्ववचनकल्पनापेक्षया सूत्रोदाहरणत्वमेव तस्य युक्तमिति भावः । अत्रैवेति । ग्राहकसूत्रएवेत्यर्थः । अत्र च उर्ऋदिति सूत्रे तपरत्वं मानम् । तद्धि चुरादिणयन्तात्कृतधातोर्लुङ्यचीकृतदित्यत्र दीर्घऋकारस्य स्थाने ह्रस्व एव यथा स्यादित्यर्थम् । पूर्वेणात्राणग्रहणे तूद्देश्येन विधेयेन च ऋकारेणानण्त्वाद्भिन्नकालाग्रहणेन न तस्य स्थानित्वं न वा आदेशत्वं प्रसक्तमिति व्यर्थं तत्स्यात् । न च तपरसूत्रेण ऌकारग्रहणार्थं तत् । स्थानेन्तरतमपरिभाषया ऋकारस्थाने तस्य वारणेन तद्ग्रहणे फलाभावात् । न चैवमज्ञापितेऽपि भाव्यमानत्वात्सवर्णग्रहणाप्रसक्तेस्तद्वैयर्थ्यम् । तपरत्वाभावे आदेशान्तरनिवृत्त्यर्थत्वेन स्वरूपाभ्यनुज्ञानार्थतया ऽपूर्वबोद्ध्यत्वाभावेनाविधेयत्वात् । कृते तु तपरत्वे भाव्यमानताऽपीत्यन्यदेतत् । अनिष्पत्तेरिति । वर्णानामुपदेशस्तावत्तदुत्तरकालमित्सञ्ज्ञा तदुत्तरमादिरन्त्येनेति प्रत्याहारस्तदुत्तरकाला सवर्णसञ्ज्ञा तदुत्तरकालमणुदिदिति एतेन समुदितेनान्यत्र सवर्णानां ग्रहणमिति वाक्यापरिसमाप्तिन्यायादित्यर्थः । अयं भावः । आदिरन्त्येनेति प्रत्याहारसिद्धौ नाज्झलावित्येतद्वाक्यार्थबोधे सति निर्णीतैतद्विषयपरिहारेण सवर्णपदबोद्ध्यत्वनिश्चये ऽणुदिदितित्यनेन तावतां ग्रहणं बोधनीयम् अन्यथा बाधकसंभावनया तुल्यास्यसूत्रजशक्तिग्रहे ऽप्रामाण्यसन्देहेन तच्छास्त्रजबोधानापत्तिः । न चैतद्वाक्यार्थबोधतः प्राक् तन्निश्चय इति । यत्तु निषेधवाक्यार्थबोधात्पूर्वं विधेर्वाक्यार्थबोध एव नेति तन्न । पदार्थोपस्थितौ वाक्यार्थबोधे बाधकाभावात्, निषेधस्य प्रतियोगिज्ञानोपपादकतया विद्ध्यपेक्षत्वे ऽपि विधेस्तदपेक्षत्वे मानाभावाच्च । रमास्विवत्यत्र षत्वमिति । सर्वस्याप्येकया युक्त्या वारणेनापाद्यमाने ऽर्थे न्यायानादरादेवमुक्तम् ॥

स्थितम् ॥

वृद्धिरादैच् ॥ ऐजिह द्विमात्र एव तात्परत्वात्तेन कृष्णौकत्वमित्यत्र त्रिमात्रो न । एवमुत्तरसूत्रे ऽपि । तेन गङ्गोदकमित्यादौ त्रिमात्रो न ॥

भूवादयो धातवः ॥ भूश्च वाश्चेति द्वन्द्वः । आदिशब्दयोर्व्यवस्थाप्रकारवाचिनोरेकशेषः । भूवौ आदी येषामिति बहुव्रीहिः । भूप्रभृतयो वासदृशाः । सादृश्यं च क्रियावाचकत्वेनेत्यभिप्रेत्याह । क्रियावाचिन इति । क्रियावाचिनः किं । याः पश्यसीत्यादौ धातुत्वं माभूत् । सति हि तस्मिन् आतो धातोरिति स्यात् । भ्वादयः किम् । हिरुक्, पृथगित्याद्यव्ययानां, शिश्ये इति भावार्थतिङन्तस्य च मा भूत् । स्तम्भ्वादीनामु-

---

भाष्ये स्थितमिति । अनेनाकारप्रश्लेषे मानं दर्शितम् । सादृश्यं चेति । बाधातौ वासादृश्यं च प्रयोगभेदेन बोध्यम् । आतो धातोरिति न च स्वर्थनिमित्तकटापो बहिरङ्गासिद्धत्वम् । नाजानन्तर्यइति निषेधात् । ततोपि बहिर्भूतसंख्यानिमित्तकविभक्तिनिमित्तकभसञ्ज्ञानिमित्तकत्वेन लोपस्य बहिरङ्गत्वाच्च, अर्थनिमित्तकबहिरङ्गत्वस्याभावाच्च । नाप्ययं लाक्षणिकः । नकारजावनुस्वारपञ्चमौ झलि धातुषु । सकारजः शकारश्चे षोट्टवर्गस्तवर्गज इत्यभियुक्तोक्तेर्ध्वादिषु लाक्षणिकानामपि दर्शनेन तद्विषये तत्परिभाषाया अप्रवृत्तेः । आतो धातोरित्यत्र प्रतिपदोक्त आकारो गृह्यतइति तु वक्तुमप्यशक्यम् । पशुष इत्यसिद्ध्यापत्तेः । पशुं सनोतीति विट्, विड्वनोरित्यात्वम् । आतोनाप इति वार्त्तिकमते तु विकल्पार्थकनिपातवाशब्दस्य धातुत्वे प्रातिपदिकत्वाभावात्सुबभावे पदत्वानापत्तिर्दोषः । क्रियात्वं साध्यत्वेन प्रतीयमानत्वम् । साध्यत्वं चोत्पाद्यमानत्वमेवेत्यन्यत्र विस्तरः । हिरुगित्यादि । एषां क्रियासमानाधिकरणत्वाल्लिङ्गाद्यनन्वयित्वाच्च तदर्थस्य क्रियात्वमित्यभिमानः । एषामव्ययेषु पाठस्तु अप्रातिपदिकत्वे ऽव्यकजर्थः स्यात् । एतेन तेषु पाठसामर्थ्याद्धातुत्वाभाव इत्यपास्तम् । नन्वेषां क्रियाकाङ्क्षादर्शनेन न क्रियावाचकत्वमत आह । शिश्ये इति । कालोपि धात्वर्थ एवेति न क्रियावाचकत्वहानिस्तस्य च धातुत्वे आदेच उपदेशे, इत्यात्वं स्यात्तद्धि अनैमित्तिकं धातुत्वनिमित्तकं चेति स्पष्टमेव । अत्र प्रत्ययस्यैव धातुत्वापत्तिर्बोध्या तिङन्तस्य तूपदेशाभावान्नात्वप्रसक्तिरित्याहुः । ननु षष्ठे प्रकृतसूत्रे धातुग्रहणासंबन्ध उक्तो भाष्ये इति न तस्माद्धातुत्वनिमित्तकम् । किं चायितीति प्रसज्य प्रतिषेधेपि शित्परत्वयोग्यस्यैवात्व-

दित्करणेन सौत्राणां धातुत्वं ज्ञाप्यते । चुलुम्पादीनां तु बहुलमेतन्निदर्शनमिति गणसूत्रेण संग्रहः ॥

चादयः ॥ अद्रव्यार्थाः किम् । पशुः । लिङ्गसंख्यान्वितं द्रव्यम् । इह तु स्यादेव । लोधं नयन्ति पशु मन्यमानाः । पशु इति सम्यगर्थे ॥

उपसर्गाः ॥ निस्, दुस, इति सान्तौ ॥ निसस्तपताविति निर्देशात् । अयोगवाहानामविशेषेणेति प्रकरणे निष्कृतं दुष्कृतमित्युदाहृत्य इदुदुपधस्य सकारस्य यो विसर्जनीय इति भाष्यकारोक्तेश्च । उपसर्गस्यायतावििति सूत्रे वामनोप्येवम् । निरः कुषः, सुदुरोरधिकरणे, इति निर्देशाद्रेफान्तावपीति तत्रैव सूत्रे हरदत्तः ॥ इति संज्ञाप्रकरणम् ॥

---

विधानाज्ञात्वप्रसक्ति, रपि च वासादश्यमन्यानभिहितक्रियावाचकत्वेनेति न दोषोत आह । चेति । सूत्रशेषभाष्योक्तेष्वाणायति, वद्द्यती, त्यादिषु च धातुत्वे शास्त्रविषयतया साधुत्वापत्तिरिति तद्व्यावृत्तये तदिति भावः । उदित्करणेनेति । इदमुपलक्षणम् । तत्प्रकृतिकच्ल्यनुवादेनाङ्विधानेन सार्वधातुके परे विकरणविधानेन च धातुत्वम् । जुचंक्रम्येत्यत्र पठितजोः जपजमेत्यत्र पठितपसः क्रुतिप्रभृतीनां च केषां चिद्धात्वधिकारविहितकार्योद्देश्यत्त्वाद्बोद्धयम् । एतैश्च स्थितस्य तेषां पाठस्य भ्रंशोऽनुमीयते इति भावः । मैत्रेयाद्यन्यसंमतं समाधिमाह । बहुलमिति । सम्यगर्थे इति । न च लुब्धमूर्षि नयन्ति पशुं मन्यमाना इति निरुक्ते पशुमिति सानुस्वारपाठात् तत्र पश्विति लुप्तविभक्तिकं सत्त्ववाचीति वाच्यम् । लोधमित्यनवगतमिति तद्भाष्योक्त्या तन्मात्रनिर्णायके निरुक्ते पशुशब्दांशे ऽन्यथा पाठे मानाभावात् । स्पष्टं चेदं प्रकृतसूत्रे हरदत्तग्रन्थे दशधातौ माधवग्रन्थे चेति दिक् । वामनोप्येवमिति । तत्र हि दुः सान्त इति तेनोक्तम् ॥

इति सञ्ज्ञाप्रकरणम् ॥

---

इको गुणवृद्धी ॥ गुणवृद्धिशब्दाभ्यामिति । एतच्च पूर्वसूत्राभ्यां गुणवृद्धिपदे अनुवर्त्य गुणो वृद्धिरिति ये गुणवृद्धी इति योजनया लभ्यते । तेनेह न । दिव औत् । द्यौः । सदादीनामः । स इमम् । षष्ठ्यन्तमिति । सूत्रे षष्ठ्यन्तस्यानुकरणाच्छब्दस्वरूपपरतया नपुंसकात्सोर्लुगिति भावः । पदमिति । तच्च संभवति सामानाधिकरण्ये इगन्तस्याङ्गस्येत्यादिक्रमेण संबध्यते । मिदेर्गुणः मृजेर्वृद्धिरित्यादौ तु सामानाधिकरण्यासंभवान्मिदिमृज्योरवयवस्येक इति संबध्यते । यत्तु इक एव स्थाने स्त इति प्राचा व्याख्यातं, यच्च तट्टीकाकृतोक्तमनियमप्रसङ्गे नियमार्थमिदमित्यादि । तत्सर्वं भाष्यविरोधादुपेक्ष्यम् । तच्छेषपक्षं दूषयित्वा

---

योजनयेति । यद्यपि तदनुवृत्त्यैव सिद्धे सामर्थ्याच्छब्दव्यापाराश्रयणेन लभ्यते मूलोक्तार्थस्तथापि मन्दबुद्धिसाधारण्येन स्फुटत्वायैवमेवोक्तम् । स इति । अत्र नैव स्यादिति भावः । इममिति । अन्त्येकारस्यैव स्यान्न त्वनन्त्यस्येति भावः । सोर्लुगिति । अत एव दीर्घो नेति भावः । तच्चेति । इक इति पदं चेत्यर्थः । अनेनात्र सूत्रे पदोपस्थितिपक्ष इति सूचयति । अचो ञ्णिति, ओर्गुणः, इत्यादौ तु लिङ्गस्य श्रुत्यपेक्षया दुर्बलत्वेन प्रथमतः श्रौताचपदार्थादिघटितवाक्यार्थबोधे वृत्ते निर्दिष्टस्थानिकत्वेनोपस्थितस्यापीक्पदस्य वाक्यार्थे ऽनन्वयः । सार्वधातुकेत्यादौ तु तदुपस्थितिं विना स्थान्याकाङ्क्षाशान्त्यभावेन बोध एव नेति विशेषः । एवं च पदश्रुतिनिमित्तैषा पदैकवाक्यतया ऽन्वयवत्यन्तरङ्गा । स्थानषष्ठीत्वानिर्णये उपस्थितालोन्त्यपरिभाषया अनन्त्यस्य गुणव्यावृत्तये वाक्यैकवाक्यतया ऽन्वय इति बहिरङ्गा स्या तदाह । इगन्ताङ्गस्येत्यादि । मृज्योरवयवस्येति । एवं च स्थानषष्ठीत्वाभावनिर्णयेनालोन्त्यस्येत्यस्य प्रवृत्तिरेव नेति भावः । नियमार्थमिदमिति । तत्तद्विधायकैर्विहितयोर्गुणवृद्ध्योरलोन्त्यस्येतिवदिदमपि स्थानिनियमार्थमिति तदाशयः । तत्सर्वं भाष्येति । द्वयोर्नियमयोः सार्वधातुकेत्यादावविरोधेनेग्रूपस्यान्त्यस्येत्यर्थो वाच्यः । अन्त्यस्येक इति वा । उभयथा ऽपि द्वयोर्विशेष्यविशेषणभावसत्त्वात्तच्छेषपक्षे पर्यवसानम् । सः अलोन्त्यस्येति नियमः शेषो विशेषणमस्येति तदर्थः । तस्यालोन्त्यस्येत्यस्य विशेषणमिति वा । एवं च मिदेर्गुण इत्यादौ परस्परविरोधादनयोस्त्यागे सर्वादेशगुणापत्त्या तद्विरोध इति भावस्तदाह । तच्छेषपक्षमिति ॥

पदोपस्थितिपक्षस्यैव भाष्ये समर्थितत्वादित्याहुः । तच्छेपपक्षे ऽपि दूषणोद्धारस्तु शब्दकौस्तुभे स्पष्टीकृतोस्माभिः । अचां मदुध्य इति । यत्तु प्राचोक्तमन्त्यादचः पर इति । तन्न । शे मुचादीनामित्यादावन्त्यस्याचोसंभवात् । तस्यैवान्तावयव इति । तेन त्रपूणीत्यादौ अङ्गस्य नान्तत्वेन दीर्घः सिद्धः । परादित्वे स न सिद्ध्येत् । अभक्तत्वे तु वहंलिह इत्यत्र वहाभ्रे लिह इति खशि अरुर्द्विषदिति मुमोऽनुस्वारो न स्यात् । अपदान्तत्वात् । यत्त्वभक्तत्वे त्रपूणीति दीर्घो न स्यादिति । तत्तदादिग्रहणं स्यादिनुमर्थमित्यङ्गसंज्ञासूत्रस्थवार्तिकेनैव दूषितप्रायम् । स्थानेयोगेति । स्थानेन योगोस्या इति विग्रहः । निपातनादेत्वम् । अनेक-

---

दूषणोद्धारस्त्विति । मिदेरित्यत्र मिद इर्मिदिस्तस्येति व्याख्यानान्न दोषः । पुगन्तेत्यत्र पुक्यन्तो लघ्वी उपधेति व्याख्येयमित्यादिभाष्योक्तदूषणोद्धारस्त्वित्यर्थः । न च यापयति, क्ष्मापयतीत्यादौ दोषः । गुणे कृते वृद्ध्या रूपसिद्धेः । अत एव समयाच्च यापनायामिति निर्देशः संगच्छते तदाह । कौस्तुभे स्पष्टीकृत इति । नन्वेवं तर्हि किमर्थं प्राचां पक्ष उपेक्षित इति चेच्छृणु । लघूपधांशे इक्परिभाषानुपस्थितावनिग्लक्षणत्वाद्भिन्नमित्यादौ गुणनिषेधानापत्तिभिया स उपेक्षित इति । क्नोः क्त्वित्त्वस्यानिग्लक्षणत्वे ऽपी गुणनिषेधप्रवृत्तिज्ञापकत्वाश्रयणे तु तस्य पदोपस्थितिपक्षज्ञापकत्वमेवोचितमिति दिक् ॥

इत्यादाविति । आदिना झलन्तलक्षणो नुम, इदितो नुमित्यादि च । अचो ऽसंभवादिति । नुमो मित्त्वं तु ज्ञानानीत्यादौ चरितार्थमिति मुचादावन्त्यस्यैव स्यादिति भावः । दीर्घः सिद्ध इति । तच्छब्देन यस्य विहितः स समुदायः परामृश्यते इति भावः । यद्यपि तस्यान्त्याच इति व्याख्याने ऽपि भवितेत्यादौ तासवयवेटो लघूपधाङ्गावयवत्वेन प्राप्तस्य गुणस्य दीधीवेवीटामिति निषेधारम्भेण लोकव्यवहारेण चावयवावयवस्य समुदायावयवत्वाङ्गीकारादत्र न दोषः । तथापि तथा न व्याख्यातं पञ्चारत्नीनीत्यादौ पदस्य विभज्यान्वाख्याने उत्तरपदस्यापि नान्तत्वापत्ताविगन्तेति स्वरानापत्तेरिति स्पष्टं भाष्यादौ । त्रपूणीत्युपलक्षणं ताता पिण्डानामिति नलोपसिद्धेः । तानितानीत्यर्थे शेश्छन्दसीति शेर्लोपे तदुदाहरणम् ॥

स्थानेनेति । स्थानशब्दार्थेनेत्यर्थः । तन्निरूपितसंबन्धः षष्ठ्यर्थो न त्वु तद्रूपः

विधमिति । स्थानार्थगुणप्रमाणकृतमित्यर्थः । वलीय इति । तेन चेता स्तोतेसत्र प्रमाणात आन्तर्यवानकारो नेति भावः । तस्मिन्निति सप्तम्यन्तानामनुकरणम् । निःशब्दो नैरन्तर्यपरः । दिशिरुच्चारणक्रियः । अचि यणित्युक्ते व्यवहिते ऽव्यवहिते च संति प्राप्तमव्यवहिते एवेति पूर्वस्य परस्य च प्राप्तं पूर्वस्यैवेति च नियम्यते । अव्यवहितस्येति तु फलितार्थकथनम् । परस्य यदिति । तस्मादित्युत्तरस्यादेरिति तु न सूत्रितम् । आदेरित्यंशस्य सर्वादेशबाधकत्वापत्तेः । सिद्धान्ते तु परत्वात्सर्वादेशत्वं बाधकमित्यनुपदमेव वक्ष्यति ॥

---

संबन्धस्तदर्थं इति अनेन ध्वनयति । एत्वमिति । व्यधिकरणबहुव्रीहिरयत एवेति बोद्ध्यम् । गुणप्रमाणेनेति । प्रमाणस्य ह्रस्वत्वादेर्गुणत्वे ऽपि ब्राह्मणवसिष्ठन्यायेन पृथगुक्तिः । गुणशब्देनोक्तत्रितयातिरिक्तधर्ममात्रम् । तेनानान्तर्यमेवैतयोरान्तर्यमित्यादिस्थानेन्तरतमसूत्रस्थभाष्येण न विरोधः । अन्तरतमाभाव एव गुणविधौ ऋकाराकारयोः सादृश्यमिति तदर्थः । बाह्यानां साक्षाद्वर्णावृत्तित्वे ऽप्यौपचारिकं गुणत्वं बोद्ध्यम् । अनुकरणमिति । अचीत्यादिसप्तम्यन्तार्थकस्य स्वतन्त्रतच्छब्दस्य निर्देशो न स्वरूपपरम् । व्याख्यानाद्बहुलक्ष्यसंस्कारानुरोधाच्च । सप्तमी तु सप्तम्यन्तानामेव तच्छब्दार्थत्वमिति बोधनाय । तद्बोद्ध्यार्थस्य निर्दिष्टे इत्यनेन सामानाधिकरण्याय चेति भावः । शब्दार्थकत्वेन त्वनुकरणत्वव्यवहार इति बोद्ध्यम् । दिशिरुच्चारणेति । अत एव जनपदे लुबित्यादौ न दोषः । न ह्यर्थ उच्चारितो नापि शब्दस्य निरन्तरं इति भावः । अचि यणित्युक्ते इति । अचि उपश्लिष्टस्य यणित्युक्ते इत्यर्थः । इदं संहितायामिति सूत्रे भाष्ये स्पष्टम् । फलितेति । सप्तम्यन्तार्थे ऽव्यवहिते षष्ठ्यन्तार्थोऽप्यव्यवहित एवेति भावः । न सूत्रितमिति । स्वं रूपमित्यतः प्रागिति शेषः । तत्रादेरिति पृथग्वाक्यं तत्रोत्तरस्येत्यनुवर्तते स्थानषष्ठी चेयं पञ्चमीनिर्देशेन यत्कार्यं तदुत्तरसंबन्धि उत्तरस्य स्थाने विधीयमानं चादेर्बोद्ध्यमिति वाक्यार्थद्वयं वाक्यभेदसामर्थ्याच्चादेरित्यंशं विना ऽपि क्वचिदंशान्तरप्रवृत्तिः । आदेरित्यंशस्त्वनुवृत्तोत्तरस्येत्यस्यावृत्त्या परत्वबोधकशब्देन यत्र विधानं तत्रैवेति नित्यं ङित इत्यादौ न प्रवर्त्तत इति भावः । वक्ष्यतीति । न चानेकाल्शित्यतः पूर्वमेव तस्मिन्निति निर्दिष्टे पूर्वस्य, तस्मादित्युत्तरस्यादेरिति सूत्रे कुतो न पठिते इति वाच्यम् । आदेरित्यंशे षष्ठीस्थाने इत्यस्यासंबन्धे आज्जसेरसुगित्यादावपि तस्य प्रवृत्त्यापत्तेः

अनेकाल् ॥ शित उदाहरणमिदम इशू । इतः । यत्तु वृत्तिकृता जशसोः शिरित्युदाहृतं तन्न । सर्वादेशतायाः प्राक् शित्त्वस्यैवालाभात् । तत्र हि डाणलोरिवानुपूर्व्यादनेकाल्त्वेनैव सर्वादेशत्वमिति सिद्धान्तः । इसादाविति । आदिशब्देनातो भिस ऐस् इति गृह्यते । परत्वादिति । अत एवादेः परस्येति पृथक् क्रियते इत्युक्तम् । उत्तरस्येत्यंशस्तु औशैसोरपि प्रवर्ततएव । यत्तु प्राचा आदेरिति सूत्रं विवृण्वता पञ्चमीनिर्देशेनेत्याद्युक्तं तदसम्बद्धमिति स्पष्टमेव । परनित्येति । परान्नित्यं यथा । तुदति । रुणद्धि । परमपि लघूपधगुणं बाधित्वा शश्नमौ । तथा रन्धेर्णिच् रन्धयति । परामप्युपधावृद्धिं बाधित्वा रधिजभोरिति नुम् । न च सोपि शब्दान्तरप्राप्त्या ऽनित्य इति वाच्यम् । कृताकृतप्रसङ्गमात्रेणापि क्व चिन्नित्यताभ्युपगमात् । अन्तरङ्गं यथा । उभये देवमनुष्याः । इह प्रथमचरमेति परमपि विकल्पं बाधित्वा सर्वादीनीति सर्वनामसञ्ज्ञा विभक्तिनिरपेक्षत्वेनान्तरङ्गत्वात् । अपवादोपि यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यतएव । तद्यथा । अयजे इन्द्रं, ग्रामे इह, सर्वे इत्थ, मत्रान्तरङ्गेण गुणेन सवर्णदीर्घो बाध्यते ।

---

संबन्धे मध्ये तस्मिन्निति तस्मादित्यनयोरपि तत्संबन्धे तयोरप्यागमविषये ऽप्रवृत्त्यापत्तेरिति दिक् ॥

डाणलोरिवेति । आदेशानां प्रत्ययाधिकारे पाठे ऽपि वाक्यार्थबोधोत्तरमेव प्रत्ययत्वज्ञानेनोपदेशे णकारे इत्त्वाप्रवृत्तेस्तदुत्तरं लक्ष्ये प्रवृत्तिकाले इत्वे ऽप्यनेकाल्त्वाक्षतेरिति भावः । प्रवर्तत एवेति । उपपादितमेतत् । शब्दान्तरप्राप्त्येति । यद्व्यक्तिसंबन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसंबन्धितयैव पुनः प्रवृत्तौ कृताकृतप्रसङ्गित्वं प्रसिद्धमिति भावः । कृताकृतेति । व्यक्तिविशेषानाश्रयणेनेत्यर्थः । वृद्ध्यौत्वतृज्वद्भावेत्यस्य त्वत्र न प्राप्तिः साहचर्येण विभक्तिनिमित्तानामेव वृद्ध्यादीनां तत्र ग्रहणात् । नित्यत्वेनैव सिद्धे वाचनिकपूर्वविप्रतिषेधाश्रयणे फलाभावाच्चेति दिक् । अन्तरङ्गत्वादिति । भाष्ये त्वयच् प्रत्ययान्तरं न तु तयबादेशः उभयीत्यत्र ङीप्तु मात्रजिति प्रत्याहाराश्रयणेन साधितः एवं चोभयशब्दे विकल्पस्य प्राप्तिरेव नेति उक्त-

स च यद्यपि यण्गुणयोरपवादस्तथापि समानाश्रये चरितार्थः । तथा च वार्तिकम् । इण्ङिशीनामाद्गुणः सवर्णदीर्घत्वात् । इति ॥

असिद्धिमति । तेन पचावेदमित्यादावेत ऐत्वं न । अकृतव्यूहा इति । यद्यपि कृतमपि कार्यं निवर्त्तयन्तीति परिभाषान्तरं पठ्यते फलं च तुल्यम् । तथापि अकृतेत्येव लघु । प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरमिति न्यायादिति भावः । न कुर्वन्तीति । यथा निषेदुषीमित्यादौ क्वसोरिटमन्तरङ्गत्वात्प्राप्तमपि भाविना संप्रसारणेन वलादित्वं नङ्क्ष्यतीत्यालोच्य न कुर्वन्तीत्यर्थः ॥ इति परिभाषाप्रकरणम् ॥

---

म् । अन्तरङ्गस्य बलवत्त्वे ज्ञापकमन्यत्र प्रपञ्चितम् । बाध्यत एवेति । निरवकाशत्वरूपस्य बलवत्त्वबीजस्याभावात् । तेनेति । पूर्वा तु अन्तरङ्गबहिरङ्गयोर्युगपत्प्राप्तावेवेति भावः । न कुर्वन्तीत्यर्थ इति । यदि तु सेदुष इत्यादौ पदावधिके ऽन्वाख्याने सेद्वस्असिति स्थिते इट्संप्रसारणयोः प्राप्तौ प्रतिपदविधित्वेन शीघ्रोपस्थितिकत्वात्पूर्वं संप्रसारणे वलादित्वाभावादिटः प्राप्तिरेव न लक्ष्यानुरोधाच्चात्र पदावधिकमेवान्वाख्यानमिति तत्सिद्धिरित्युच्यते तदैषा परिभाषा निष्फलेति बोध्यम् । अत एव भाष्ये न क्वापि व्यवहृतेत्यन्यत्र विस्तरेण निरूपितम् ॥ इति परिभाषाप्रकरणम् ॥

इको यणचि ॥ प्रत्याहारग्रहणेषु तद्वाच्यवाच्ये निरूढा लक्षणा। दीर्घाज्जसि चेति ज्ञापकात् त्वादिभ्य इति निर्देशाच्च। तेनैकशब्देन षट्षष्टिर्गृह्यते। यण्शब्देन सप्त। भाव्यमानत्वेन सवर्णाग्राहकत्वे ऽपि गुणानामभेदकत्वेनानुनासिकानामपि यवलानां ग्रहणात्। अतो नास्ति यथासंख्यम्। न च लक्ष्यार्थबोधात्पूर्वभाविनं शक्यार्थबोधमादाय यथासंख्यमस्त्विति वाच्यम्। एवमपि तृतीयचतुर्थाभ्यां ऋकारलृकाराभ्यां प्रत्येकं त्रिंशदुपस्थितौ लृवर्णानां रेफादेशस्य ऋवर्णानां ला-

---

ननु व्यक्तिपक्षे इक्पदोपस्थाप्योकारादिभिर्दीर्घादिग्रहणं न स्यात् उच्चारित एव शब्दः प्रत्यायको नानुच्चारित इत्यणुदित्सूत्रे भाष्योक्तेः। न चोच्चारितस्यैव प्रत्यायकत्वे रहसि पुस्तकमीक्षमाणस्य बोधानापत्तिरिति वाच्यम्। तत्रापि पुस्तकद्रष्टुः स्वीयसूक्ष्मोच्चारणसत्त्वादित्यत आह। प्रत्याहारग्रहणेष्विति। एतेन दीर्घैकारादेर्ग्राहकशास्त्रबलेन इकारादिभिर्बोधे ऽपि तेषामिक्पदवृत्त्या ऽनुपस्थितत्वेन तदुत्तरप्रत्ययार्थानन्वयापत्तिरित्यपास्तम्। वृत्तिप्रयोज्योपस्थितिसत्त्वेनादोषाच्च। नन्वणुदित्सूत्रं व्यर्थम्। न च प्रत्याहाराग्रहणाद्यवर्णेषु चरितार्थम्। अन्यसवर्णानामिव तत्सवर्णानामपि लक्षणयैव ग्रहणसिद्धेः। न चास्य त्वावित्यादौ चारितार्थ्यम्। व्यक्तिपक्षे ऽस्य प्रत्याहारसूत्रस्थतो भेदेनाणत्वाभत्वादिति स्पष्टमणुदित्सूत्रे भाष्ये इति चेन्न। लक्ष्यतावच्छेदकज्ञानार्थमेव तच्चारितार्थ्यात्। प्रत्याहारेत्युपलक्षणं तद्वाच्यवाच्येति च। अस्य त्वावित्यादावपि स्वसदृशवाच्येषु लक्षणावश्यकत्वात्। अणुदित्सूत्रगृहीतलक्ष्यतावच्छेदकिका लक्षणा विधीयमानातिरिक्तविषये एवाप्रत्यय इत्युक्तेः। अत एव त्यदादीनाम इत्यादौ न स्वसदृशवाच्येषु लक्षणा। नाज्झलौ अणुदिदित्यत्र तु न लक्षणा तद्बोधकाले लक्ष्यतावच्छेदकाग्रहादिति भावः। तत्र प्रमाणमाह। दीर्घादिति। अक्पदीयाकारेण स्वसवर्णग्रहणेपि तत्र नादिचीत्येत्र सिद्धमिति भावः। तेन लक्षणाङ्गीकारेण। भाव्यमानत्वेनेति। विधीयमानविषये लक्षणाभावस्यानुपदमुक्तत्वादिति भावः। अभेदकत्वेनेति। शास्त्रे उच्चारितगुणानां भेदकत्वाभावे ऽपि स्वरूपकृतभेदमादाय सप्तत्वसंख्या न विरुध्यते। यदि तु अणुदित्सूत्रे ऽण्ग्रहणाद्यण्विषये गुणानां भेदकतैवोचितेति विभाव्यते तदा ऽपि चत्वारो यण इति यथासंख्यमसंगतमेव तद्ध्वनयन्नाह। अतो नास्तीति। तत्खण्डने एवाग्रहो न तु सप्तत्वसंख्यायामिति भावः। शक्यार्थबोधमादायेति। त्वादिभ्य इत्यादिनिर्देशोहित-

देशस्य च प्रसङ्गात् । तस्मादिह स्थानेन्तरतमसूत्रेणैवेष्टसिद्धिरित्यभिप्रेत्याह । स्थानत आन्तर्यादिति ।

---

तात्पर्यानुपपत्तिग्रहस्य तत्सत्त्वएव संभवेन स बोध आवश्यकस्तत्र च यथासंख्यसहायेन वाक्यार्थे निष्पन्ने त्वादिभ्य इत्यादिनिर्देशाल्लक्षणया जायमाने पुनर्वाक्यार्थबोधे लक्षितदीर्घादीनां स्ववाचकान्वयिन्येवान्वय इति भावः । स्थानेन्तरतमसूत्रेणैवेति । व्यक्तिपक्षे व्यक्तीनामानन्त्येन संख्याज्ञानाभावाद्यथासंख्यासंभवाल्लक्ष्यासिद्धेश्चेति भावः । परे तु व्यक्तिपक्षे झलादिप्रत्याहारसूत्रेषु सर्वझकारादीनां ग्रहणं दुरुपपादम् । न हि तत्र लक्षणा वक्तुं शक्या लक्ष्यतावच्छेदकाग्रहात् । एवं च तत्र प्रत्याहारसूत्रेषु जातिनिर्देशेनैव निर्वाहो नान्यथा । एवं चाइउणित्यादावपि जातिनिर्देश एवोचितः । अर्द्धजरतीयस्यानौचित्यात् । अत एवाणुदित्सूत्रे भाष्ये प्रत्याहारेष्वस्य त्वावित्यादौ च उक्तामनुपपत्तिमाशङ्क्य जात्याश्रयणमेव कृतम् । यथासंख्यसूत्रं च व्यक्तिसाम्यइव धर्मसाम्ये ऽपि प्रवर्तते । स्यतासी लृलुटोरित्यादौ यथा । नान्यत्र पक्षे ऋकारादौ लकाराद्यापत्तिः लत्वादिजातेर्ऋकारादावभावात् । न च जातिपक्षे ऽणुदित्सूत्रे ऽण्ग्रहणप्रत्याख्याने उपसर्गादृतीत्यादौ ऋकारेण लृकारग्रहणाय सावर्ण्यवचनस्थाने लृवर्णस्य ऋवदतिदेशाद् लृकारे रेफापत्तिरिति वाच्यम् । क्लृप्तशिखार्थे तस्यातिदेशस्यानित्यत्वावश्यकत्वात् । तत्पक्षे ऽणग्रहणप्रत्याख्याने ऽप्रत्यय इत्यंशो वाक्यभेदेन विधीयमाने जातिग्रहणप्राप्तसवर्णग्रहणनिषेधकस्तपरसूत्रवदिति त्यदादीनाम इत्यादौ न दोषः । एवं चात्र यपदेन जात्याश्रयणेनापि न सवर्णबोधनमिति स्त्रौजसित्यादौ अनुनासिकस्थाने ऽपि निरनुनासिक एव । अत एव स्थानेन्तरतमसूत्रे भाष्ये ऽस्य तदुदाहरणत्वमाशङ्क्य यथासंख्यमित्यनेनापि सिद्धमित्युक्तं तेनात्र तयोः फलाविशेष उक्तः । उञ इति सूत्रे नव्यानां प्रमाद एव । न च झलादिषु झकारादिभीरूपसादृश्येन सर्वझकारादिप्रतीतिरिति वाच्यम् । अगादिष्वपि किं चित्सादृश्यमाश्रित्य दीर्घादीनामपि ग्रहणोपपत्तेः । त्वादिभ्य इति निर्देशानामीषत्सादृश्येनापि ग्रहणमित्यर्थज्ञापकताया युक्तत्वात् । तदप्युक्तमइउण्सूत्रे भाष्ये रूपसामान्याद्वा सिद्धमिति । अणुदित्सूत्रे ऽणग्रहणं तु प्रत्याहाराद्यवर्णेषु णकारादिभिश्चिह्नैः प्रत्याहारसूत्रस्थोयमिति प्रत्यभिज्ञासत्त्वादुपायान्तरपरम् । आचार्याः कृत्वा न निवर्तन्तइति न्यायादिदमेवाभिप्रेत्य तत्रत्यमणग्रहणं प्रत्याख्यातं भाष्ये इत्याहुरिति दिक् ॥

वीति । यत्तु प्राचा गवे इति मत्युदाहृतम् । तन्न । सत्यप्यवङि अतो गुणइति पररूपेण रूपसिद्धेः । न च सत्यवङि ङेर्यादेशः स्यात् स्त्रियां तु टाप् स्यादिति वाच्यम् । सन्निपातपरिभाषया यादेशटापोः सुसमाधानत्वात् । न च सा ऽनित्येति वाच्यम् । तावताप्यौत्सर्गिकतत्प्रवृत्त्येष्टसिद्धेः। गवाक्ष इति । गवामक्षीवेति विग्रहः । अक्ष्णोदर्शनादित्यच् समासान्तः । वातायने रूढोयम् । पुंस्त्वं लोकात् ।

इन्द्रे च ॥ आरम्भसामर्थ्यान्नित्यमिदम् । इन्द्रे च नित्यमिति पाठस्तु भाष्यासंमतत्वादुपेक्षितः ।

एहि कृष्णेति । दूराद्धूते चेति प्लुतः । यत्तु कृष्णा३ एहीति प्राचोक्तं तन्न । दूराद्धूते चेत्यादौ वाक्यस्य टेरित्यधिकारात् । चक्र्यत्रेति । इह स्कोरिति कलोपो न । यणः कार्यकालपक्षे बहिरङ्गपरिभाषया ऽसिद्धत्वात् । स्थानिवद्भावाच्च । पूर्वत्रासिद्धीये नेति तु नास्ति । तस्य दोषः संयोगादिलोपेत्याद्युक्तेः ।

दूराद्धूते च ॥ हूतमाह्वानं तच्च सम्बोधनमात्रोपलक्षणमित्यभिप्रे-

---

तदप्रवृत्तिसंपादने ऽस्य सामर्थ्याभावात् तद् ध्वनयन्नाह । अगितीत्यादि । यथान्यासे त्वःद्युदात्तनिपातनापदेशिवद्भावयोः करणे गौरवादस्यौचित्यमिति भावः । स्थानिवत्सूत्रे भाष्येऽप्युक्तं गोः पूर्वत्वे स्थानिवत्त्वप्रतिषेधो वक्तव्यः । चित्रग्वग्रं सर्वत्र विभाषा गोरिति पूर्वत्वं प्राप्नोति । नैष दोषः । एङ इति वर्त्तते । तत्रानल्विधाविति प्रतिषेधो भविष्यति । एवन्तर्हि चित्रगोग्रमित्यत्र प्राप्नोतीति । अत्र पूर्वत्वशब्देन तदपवादप्रकृतिभावावङौ विनिगमनाविरहात् सर्वत्रेत्यवङित्यस्याप्युपलक्षणम् । अत एव प्रकृतिभावे इति त्यक्त्वा पूर्वत्वे इत्युक्तं वार्तिके भाष्ये च । चित्रगोशब्दस्य लाक्षणिकत्वे ऽपि स्थानिवत्त्वप्राप्तौ तत्प्रतिषेधः कृतः । एङः प्रतिपदोक्तत्वाश्रयणे तु तन्न कार्यमिति लाघवमिति दिक् । टाप्स्यादिति । ङीष उपलक्षणमिदम् । इष्टसिद्धेरिति । गवीत्यस्य स्थाने गवे इति स्यादिति तद्ग्रन्थव्याख्यानमपि न समञ्जसम् । भाष्यासंमतत्वादिति । इन्द्रे इति सामर्थ्यान्नित्यमिति तदुक्तेरिति भावः ।

प्लुत इति । प्रकृतिभाववचनसामर्थ्यादेव प्लुतस्य तत्र नासिद्धत्वः

त्याह । दूरात्संबोधनइति । उपलक्षणतया व्याख्यानस्य फलमुदाहरति । सक्तून् पिबेत्यादि ।

गुरोरनृतः ॥ अपिशब्दो गुरोरगुरोश्च टेः प्लुतार्थः । देवदत्तेति । अस्यैहीत्यादिः । एवमग्रेपि सर्वः प्लुत इति । तथा च अग्नीत्प्रेषणे परस्य चेति सूत्रे भाष्यम् । सर्वः प्लुतः साहसमनिच्छता ऽपि विभाषा कर्तव्यइति । साहसं शास्त्रत्यागः तदनिच्छता ऽपि शास्त्रमनुरुन्धानेनापीत्यर्थ इति हरदत्तः । वैकल्पिकेष्वनुष्ठानक्लेशं धर्माधिक्यफलकमप्यशक्तत्वादनिच्छतेत्यर्थ इत्यन्ये । एतेन द्वैपायनो विरहकातर आजुहाव पुत्रेति भागवतं व्याख्यातम् । प्लुतस्य वैकल्पिकत्वात् । किं चेह पुत्रशब्दस्य वाक्यान्तत्वं नास्तीत्यपि सुवचम् । आख्यातप्राग्वर्तिनोप्यनुकरणसंभवात् । अपि च अस्तु प्लुतः प्रकृतिभावस्तु वैकल्पिकत्वान्मास्तु । तथा च ई चाक्रवर्मणस्येति सूत्रे भाष्यम् । ईग्रहणेन नार्थः वशा, इयं वशेयमिति । प्लुतप्रकृतिभावः सर्वोपि चाक्रवर्मणमते नास्तीति भावः । अपि च इह प्रकृतिभावोपि दुर्लभ एव । अप्लुतवदुपस्थितइति सूत्रात् । उपस्थितं नामावैदिक इतिशब्दस्तस्मिन्परे प्लुतोऽप्लुतवत्स्यादिति हि तस्यार्थः । एवं चतुर्थापि निर्वाह स्पष्टे आर्ष प्रयोगे इति श्रीधरोक्तिर्नादर्तव्या ॥

---

मिति भावः । उपलक्षणेति । एवं चासत्यप्याह्वाने भवतीति भावः ॥ एहीत्यादिरिति । वाक्यस्य टेरित्युक्तेरिति भावः ।

हरदत्त इति । कैयटोप्येवम् । अत्र पक्षे विभाषा पृष्टेत्यत्र विभाषाग्रहणमप्रयुत्या ऽनुवादः । अविद्वांसः प्रत्यभिवादे इत्यादि पस्पशार्थं भाष्यमपि वैकल्पिकेषु भावानुष्ठानौचित्येन शास्त्राज्ञाननिन्दापरं बोद्धव्यम् । आख्यातप्रागिति । पुत्र एहीति वाक्यस्यस्येत्यर्थः । अनुकरणे दूरात्संबोधनत्वाभावाच्चेत्यपि बोद्धव्यम् वैकल्पिकत्वादिति । अस्य अप्लुतवद्भावस्य वैकल्पिकत्वेन तत्त्वामित्यर्थः । प्लुतप्रकृतिभाव इति । तस्य मतं अप्लुतवद्भावोक्तेरिति भावः । एतेन चाक्रवर्मणस्याचार्यस्याप्लुतवदित्येव भाष्योक्तेरिदं सर्वं चिन्त्यमित्यपास्तम् । प्रकारान्तरेणाप्यप्लुतवद्भावोनेत्याह । अपि चेति । अवैदिकइति । अस्य पुराणस्थत्वेनावैदिकत्वं स्पष्टमेव ।

द्विवचनमिति । सुप्तिङन्तमित्यन्तग्रहणेन सञ्ज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्तीति, ज्ञापितत्वादिति भावः । तेनेह न । कुमार्योर्वध्वोश्चागारं कुमार्यगारं वध्वगारमिति । स्पष्टं चेदं भाष्यादौ । द्विवचनान्तं प्रगृह्यं स्यादिति तु प्राचः प्रमाद एव । हरी एताविति । इह शाकलं न । प्लुतप्रगृह्या इत्यत्र नित्यग्रहणादित्युक्तम् । अत्र वृत्तिकारः । मणीवादीनां प्रतिषेधो वक्तव्य इति पठित्वा मणीव, रोदसीव, दंपतीव,-जंपतीवे,त्युदाजहार तच्च मुनित्रयानुक्तत्वादप्रमाणमिति कैयटहरदत्तादयः एवं स्थिते मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ ममेति भारतप्रयोगं समर्थयते । इवार्थइति । वशब्द इति । वं प्रचेतसि जानीयादिवार्थे च तदव्ययमिति मेदिनी । व वा यथा तथैवैवं साम्ये इत्यमरग्रन्थव्याख्यावसरे शात्रवं व पपुर्यश इति कालिदासप्रयोगस्याभियुक्तैरुदाहृतत्वात् । कादम्बखण्डितदलानि व पङ्कजानि इत्यादिदर्शनाच्चेति भावः । यत्तु पाठान्तरं वद्वा यथा तथेत्यादि तदयुक्तम् । नामालिङ्गानुशासनप्रक्रमे तद्धितवतेरननुगुणत्वात् । अपत्यसमूहादिपर्यायमध्ये ऽण्फिञ्वुञादीनामनुक्तेश्च ।

अदसो मात् ॥ इह एकारो नानुवर्तते असंभवात् इत्यभिप्रेत्याह । ईदूताविति । ननु उकारानुवृत्तिर्व्यर्था । स्त्रियौ फले वा अमू आसाते इत्यत्र पूर्वेणैव सिद्धेः । सुत्वस्यासिद्धत्वे ऽप्येकारान्तत्वादत आह । रामकृष्णाविति । पुंसि पूर्वेण न सिध्यति औकारान्तत्वादिति भावः । अदसो मादिति सूत्रं प्रति तु मुत्वमीत्वे नासिद्धे आरम्भसामर्थ्यात् ।

---

:कुमार्योरिति । अत्र हि प्रत्ययलक्षणेन द्विवचनान्तत्वं श्रुत्या चेदन्तत्वमस्तीति भावः । इदं च द्विवचनान्तमीदन्तमित्यर्थे । ईदन्तं यद्द्विवचनं तदन्तमित्यर्थे तदन्तविध्यसंभव एव दोषो बोध्यः । इत्युक्तमिति । मूले इति शेषः । शात्रवं वेति । शात्रवं यश इवेत्यर्थः । ववेत्यादिकोशप्रदर्शनेन वशब्द इवपर्यायः स्वतन्त्र एव न तु सत्याभामादिवत् एकदेश इति सूचयति । विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपो वाच्य इति वचनेन तादृशस्थले तथा कल्पने ऽप्यखण्डे पदे तथात्वे मानाभावात् । आरम्भसामर्थ्यादिति । ननु का-

एकारोपीति । तथा च एकारानुवृत्तितात्पर्यग्रहणफलकं मादूग्रहणमिति भावः । अत्रेदं चिन्त्यम् । ईदूत्सप्तम्यर्थे प्रगृह्यम् । अदसः । एच द्विवचनमित्येव कुतो न सूत्रितम् । एवं हि पूर्वसूत्रस्थमीदूद्ग्रहणं प्रकृतसूत्रे मादूग्रहणं च मास्तु । एकदेशानुवृत्तिक्लेशोपि नेति ।

शे ॥ छान्दसमपीदं संदर्भशुद्ध्यर्थमुक्तम् । वस्तुतस्त्वनुकरणार्थतया लोकार्थमपि संभवत्येव । त्वे रायो मे राय इत्यादौ त्वे,इति मे,इति इत्यनुकरणे प्रयोजनलाभात् । अस्मे इति । अस्मभ्यमित्यर्थः । भ्यसः सुपां सुलुगिति शेआदेशः । शेषे लोपः ।

निपात ॥ अनाङिति पर्युदासादेवाङ्रूपनिपाते लब्धे निपातग्रहणमुत्तरार्थं स्पष्टार्थमिहैव कृतम् । आ एवमिति । पूर्वं प्रक्रान्तस्य वाक्यार्थस्यान्यथात्वद्योतकोयमाकारः । पूर्वमित्थं नामंस्था इदानीं त्वेवं मन्यसे इत्यर्थः । आ एवं किलेति । स्मरणद्योतकोयमाकारः । वाक्येस्मा-

---

र्यकालपक्षे ऽनुनासिकप्रतिषेधेन चारितार्थ्यं तत्पक्षे हि सञ्ज्ञाशास्त्रस्य न पृथग् बोधकत्वं, पूर्वत्रासिद्धमिति चातिदेशः कार्यार्थः । कार्यज्ञानं वाक्यार्थबोधोत्तरमिति यद्देशे वाक्यार्थबोधस्तद्देशस्थत्वमेव तस्य । किं च अधिकारः सः । एवं च मुत्वदृष्ट्या अनुनासिकविधेरसिद्धत्वेन तदेकवाक्यतापन्नसञ्ज्ञाया अपि तद्दृष्ट्या ऽसिद्धतया मुत्वशास्त्रे ऽनुवृत्तपूर्वत्रासिद्धमित्यत्रत्यपूर्वशब्देन तदेकवाक्यतापन्नस्यादसो मादित्यस्य ग्रहीतुमशक्यत्वम् । एतेन कार्यकालपक्षे ऽपि पाठकृतपूर्वत्वस्यानपगमेन सञ्ज्ञां प्रत्यसिद्धत्वं दुर्वारमित्यपास्तमिति चेन्न । अप्रगृह्यादस इति न्यासेनैव सिद्धौ सामान्यसञ्ज्ञासूत्रकरणसामर्थ्येन प्लुतप्रगृह्या इत्यत्राप्युपस्थित्या तत्सामर्थ्येनासिद्धत्वबाधात् । हे ऽमुका ऽमुक इत्यादौ व्यवस्थितविभाषाश्रयणात्तयोरनभिधानाद्वा सूत्रमते ऽपि नानुनासिक इत्याशयात् । स्पष्टं चेदं भाष्ये ।

छान्दसमिति । शेआदेशस्य छान्दसत्वादिति भावः । मे इतीत्यनुकरणइति । प्रकृतिवदनुकरणमित्यतिदेशेन पदत्वात्पदान्तत्वप्रयुक्तः प्रकृतिभावस्तत्र तेनातिदेशेन प्रगृह्यत्वं तु न । त्वे राय इत्यादावनुकार्ये फलाभावेन प्रगृह्यत्वाप्रवृत्त्या तदनुकरणे ऽतिदेशनासिद्ध्योपदेशप्रवृत्तिरेव वाच्येति भावः ।

अन्यथात्वेति । अनभिमतत्वेत्यर्थः । तदाह । नामंस्था इति । स्मरणेति ।

दि । तथा च भाष्यम् । ईषदर्थे क्रियायोगे मर्यादाभिविधौ च यः । एतमातं ङितं विद्याद्वाक्यस्मरणयोरङित् ॥ १ ॥ इति । अत्र अङिल्लक्षण एव तात्पर्यं लाघवात् । अन्यस्य ङित्त्वं त्वर्थसिद्धम् । ईषदर्थेसावित्तु अत्रयुक्त्यानुवादः । एवं च अभ्रआँ अप इत्यत्र सप्तम्यर्थवृत्तेरप्याकारस्य ङित्त्वादाङोनुनासिकश्छन्दसीति प्रवर्ततइति भावः ।

ओत् ॥ निपातः किम् । देवोसि । वायवायाहि ।

संबुद्धौ ॥ ऋषिर्वेदस्तदुक्तमृषिणेत्यादौ तथा दर्शनादिसभिप्रेत्याह । अवैदिकइति । संबुद्धौ किम् । अहो इति । अत्र परत्वाद्विकल्पो मा भूत् । यत्त्वोदित्यत्र निपातानुवृत्तेरिह च संबुद्धिग्रहणस्य प्रत्युदाहरणं वृत्त्यादावुक्तं गवित्ययमाहेति । तन्न । तत्र प्रगृह्यसञ्ज्ञासत्त्वे ऽपि प्रकृतिभावाप्रसक्तेः । इकोसवर्णइत्यत्र हि पदान्तग्रहणमनुवर्त्ततइत्याकरे स्पष्टम् । एवं च प्लुतप्रगृह्या इति सूत्रे तत्संबन्ध आवश्यकः ।

---

विस्मृतस्य स्मरणविषयताद्योतक इत्यर्थः । मर्यादाभिविधावित्यत्र मद्ध्यमपदलोपी समासः । तत्साहिते ऽभिविधावित्यर्थः । सप्तम्यर्थेति । तद्वृत्तित्वं च तस्य निरुक्ते स्पष्टम् । अव्ययीभावाभावश्च श्रुतौ छान्दसत्वाद्बोध्यः ।

अत्र परत्वादिति । न चैतदभावे नित्यविधिर्दुर्वारः । इतिशब्दातिरिक्तेओदित्यस्य निपातातिरिक्ते सम्बुद्धावित्यस्य चारितार्थ्येन सामर्थ्याभावादेवं च फले ऽविशेष इति वाच्यम् । परत्वेन विकल्पप्रवृत्तावभावपर्यन्तमप्यस्य व्यापारेण सकृद्गतिन्यायेन ओदित्यस्य तदभावे ऽप्रवृत्तेः । अत एव न यदि, विभाषा साकाङ्क्षे, इति सूत्रे निषेधीयोभयत्र विभाषेति संगच्छते । अन्यथा परत्वादेतत्प्रवृत्तावप्यनेन निषेधाभावे पूर्वसूत्रस्य दुर्वारत्वेन सा दुर्लभा स्यात् । न चाकडारसूत्रेणान्यत्र सञ्ज्ञानां बाद्ध्यबाधकभावाभावस्य ज्ञापितत्वात्परत्वाद्विकल्प इत्यसंगतमिति वाच्यम् । सञ्ज्ञाया एकत्वात् ज्ञापकस्य च विशेषापेक्षत्वेन सञ्ज्ञाभेदविषयत्वादिति भाव इति केचित् । परे तु ओदित्यस्येतिशब्दनिरपेक्षत्वेनान्तरङ्गत्वमिति परत्वं न युक्तं सम्बुद्धाविति तु निपातपदानुवृत्तये । अन्यथौदन्तनिपातस्यैवैतौ विकल्पापत्तिः । नित्याविकल्पविद्ध्योर्युगपत्प्रवृत्तावपि विरोधाभावेन परत्वादित्यस्यासंगतेः । एवं च परत्वादित्यस्योत्कृष्टत्वादपवादत्वादित्यर्थः । ओद्ग्रहणानुवृत्त्यैव सिद्धे पुनरोद्ग्रहणेनापि

गवित्ति च न पदम् । अनुकार्यानुकरणयोरभेदविवक्षया अर्थवत्त्वाभावेन विभक्तेरनुत्पादात् ।

उञः ॥ निपात एकाजिति प्राप्ते विभाषेयम् ।

ऊँ ॥ अनुनासिक इति । तेनास्मिन्परे यरोऽनुनासिकइति विकल्पः । यद्वेतनूं, इति पठसि यद्वेतदूँ, इति वा तद्दीर्घमित्यादि । एतदर्थमेव तत्रानुनासिकग्रहणम् । अन्यथा यरो ञमि ञम्वेत्येवावक्ष्यत् ।

मय उञो वो वा ॥ मयः परस्येति । परादिति तु प्राचः प्रमादः । षष्ठीनिर्दिष्टस्य हि आदेशा उच्यन्ते इति भाष्यात् । आदेशविधौ स्थानिनः षष्ठ्या एव न्याय्यत्वाच्च । असिद्धत्वादिति । अत एवेदं वत्वं त्रिपाद्यां विधीयते । प्रकृतिभावमात्रबाधनार्थत्वे हि इको यणित्यनन्तरं मय उञो वेत्येवावक्ष्यत् । यणं चान्ववर्तयिष्यत् । इह मय उञ इतौ परे

---

तन्निवृत्तिसिद्धौ वैचित्र्यार्थमेव सम्बुद्धिग्रहणमित्याहुः । आवश्यक इति । अन्यथा इकोसवर्णइत्यत्र मण्डूकानुवृत्त्यापत्तिः । सा च सम्बन्धतदभावोभयकल्पनापत्त्या ऽन्याय्येति भावः । अनुत्पादादिति । अत एव तस्याः श्रवणं न । अभेदविवक्षापदार्थश्चार्थवत्सूत्रे निरूपयिष्यते । न च लिङ्गसर्वनामनपुंसकताभ्युपगमेनोत्पन्नाया विभक्तेर्लुक् । ह्रस्वापत्तेः न च सुप्सुपेति समासेन निर्वाहः । इतिशब्दस्य शब्दस्वरूपपरतातात्पर्यग्राहकत्वेन तेनैकार्थीभावरूपसामर्थ्यस्य दुरुपपादत्वात् । न च गांभ्यां गोक्षीरमित्याद्येकदेशगोशब्दानुकरणे ऋलृक्सूत्रभाष्योक्तेन प्रकृतिवदनुकरणमित्यतिदेशेन पदत्वं सुलभमिति वाच्यम् । क्षियो दीर्घादिति सूत्रभाष्योक्तेन तदतिदेशानित्यत्वेन तदप्रवृत्तिमाश्रित्यापि सुसाधत्वेनासाधारणप्रयोजनत्वाभावादिति भावः ।

एतदर्थमेवेति । एतदर्थमपीत्यर्थः । अनितेः क्विपि सम्बुद्धावान् चिनोषीत्यत्र नश्छव्यीति रुत्वे ऽत्रानुनासिक इति पूर्वस्यानुनासिके यदेतनाँश्चिनोषि कमलँ आँश्चिनोषीत्यत्रापि फलसत्त्वात् । अवक्ष्यदिति । न चैवं न्यासे यथासंख्यापत्तिः । तस्यासार्वत्रिकत्वात् । आन्महत इत्यादिनिर्देशाच्चेति भावः । पूर्वोक्ते कमलाँश्चिनोषीत्यत्र लस्य नकारापत्तिवारणाय विधेयकोटावनुनासिक इति । विधेयकोटौ यकारमारभ्य प्रत्याहारे तु विधेयविषये सवर्णग्रहणाभावेन पूर्वोक्ते निरनुनासिकलस्यैवापत्तिरिति यथान्यासमेव साधु । इत्येवावक्ष्यदिति । न चात्रापि न्यासे सन्निपातपरिभाषया ऽनुस्वाराप्राप्तिरिति वाच्यम् । त्रिपाद्या-

अष्टाविंशतिरूपाणि । तथा हि । उञ इति प्रगृह्यत्वे किमु, इति । वत्वपक्षे किम्विति । ऊँ, आदेशे किमूँइति । आदेशस्य स्थानिवत्त्वेन मय उञ इति प्रकृतिभावापन्नादभूते आन्तरतम्यादनुनासिकेवकारे किम्वँिति । अनुनासिकाननुनासिकयोर्वकारयोर्मयो यण इति द्वित्वस्य मकारस्यानचि चेति द्वित्वस्य च विकल्पेन वत्वपक्षे रूपाष्टकम् । तदभावे द्वयमिति दशकम् । प्रगृह्यसञ्ज्ञाविरहपक्षे मय उञ इति वत्वस्यासिद्धत्वादिको यणीति यणेत्र तस्य सिद्धत्वान्मोनुस्वारे वा पदान्तस्येति परसवर्णपक्षे अनुनासिकाननुनासिकवकारद्वयोपेतमेकादशं रूपम् । अनुनासिकस्य द्वित्वे हलो यमामिति लोपस्य वैकल्पिकत्वादकरणे त्रिवकारं द्वादशं रूपम् । परसवर्णाभावपक्षे अनुस्वारस्य यत्वात्पाक्षिके द्वित्वे द्वे । संकलनया चतुर्दश । इतिशब्देकारस्य अणोप्रगृह्यस्येत्यनुनासिकविकल्पादष्टाविंशतिरिति ॥

इत्यच्सन्धिः ॥

---

न्तथापाठेन सन्निपातपरिभाषा ऽनित्यत्वस्यापि ज्ञापनादिति भावः ।

अनुनासिके वकारे इति । इदं कैयटानुरोधेन । मय उञ इत्यत्र विधीयमानस्य सवर्णग्राहकत्वाभावेनानेन सानुनासिकविधानाभावेन कथमत्र सः । अन्यथेदमो मस्यानुनासिको ऽकारः स्यात् । अत एवेदृशे विषये गुणानामभेदकत्वपक्षानाश्रयणमिति चिन्त्यम् ॥ इति स्वरसन्धिः ॥

स्तोः श्चुना ॥ स्तोरिति समाहारद्वन्द्वः । सौत्रं पुंस्त्वम् । श्चुनेति । सहयुक्तेति सूत्रे विनापि तद्योगं तृतीयेति वक्ष्यते । योगइत्येतदध्याहारलभ्यम् । अत्र स्थान्यादेशयोर्यथासंख्यं निमित्तकार्यिणोस्तु न । शादिति ज्ञापकात् । अल्पाच्तरमित्यादौ तु सौत्रत्वात् श्चुत्वं न । तज्ज्ञानमित्यादौ तु भवत्येव । स्तोः श्चौ श्चुरिति सुवचम् । न च तस्मिन्निति निर्दिष्टइति परिभाषोपस्थानेन यज्ञः याच्ञा इत्यादि न सिद्ध्येत् । शादिति लिङ्गेन तस्या इहानुपस्थानात् ।

ष्टुना ॥ इहापि कार्यिनिमित्तयोर्यथासंख्यं न । तोष्षि, इति ज्ञापकात् । ष्टौ ष्टुरिति सुवचम् । ईट्टे, ईड्टे, इत्यादौ न पदान्तादिति ज्ञापकान्न दोषः । सर्पिष्टममिति । ह्रस्वात्तादाविति षत्वम् । प्रत्यये भाषायामिति । यत्तु प्राचा मयटि नित्यमिति पठितम् । यच्च हलन्तप्रकरणे षण्णां, षड्णा, मित्युदाहृतम् । यच्च यरोऽनुनासिकइति वानुनासिक इति तत्र व्याख्यातं तत्सर्वं भाष्यविरोधादुपेक्ष्यम् । यवादिगणइति । यचि भं तसौ मत्वर्थइति संहितया पाठे तसाविति तात्पूर्वं दकारं प्रश्लिष्य भत्वेनाप्येतत्समाधातुं शक्यम् ।

---

विनापि तद्योगमिति । साहित्यं च योगक्रियायाम् । एतदिति । संयोगइति तदर्थः । सत्या भामेतिवन्निर्देशः । संयोगश्चाव्यवहितयोरेवेति चितं, कटुतैलमित्यादौ न दोषः । यथासंख्यमिति । तथदधनेत्यादेरप्यनादितया तमादाय परस्मैपदानां णलित्यादौ सूत्रान्तरस्थक्रमेणेव यथासंख्यमिति भावः । च्वादिशब्देश्चानादिसिद्धलोकप्रसिद्धक्रमेणैवोपस्थितिरिति तात्पर्यम् । ननु तज्ज्ञानमित्यादौ श्चुयोगाभावान्न स्यादत । आह । तज्ज्ञानमिति । जञयोगे तथोच्चारणमात्रं न त्विदं वर्णान्तरमिति भावः । अनुपस्थानेति । पूर्वत्वांशानुपस्थानेत्यर्थः । तेन चितमित्यादौ न दोषः ।

षत्वमिति । न च षस्य पदान्ते जश्त्वं भविष्यतीति तद् व्यर्थमिति वाच्यम् । षत्वस्यासिद्धत्वेनास्य जश्त्वाभावात् । भाष्येति । प्रत्यये इत्येव तत्र पाठादिति भावः ।

दकारमिति । चर्त्वेनेति भावः । मृच्छब्दस्य यवादिगणे पाठे न मानमिति तत्र झय इति चत्वे मृद्वानित्येवेति तात्पर्यम् । इति के चित्तन्न । मृन्मानिति काचित्कोऽसांप्रदायिकः पाठः ।

उदः स्था ॥ अनुस्वारस्य ययीत्यत्र समस्तमपि सवर्णग्रहणमिह निष्कृष्य संबध्यते । एकदेशे स्वरितत्वप्रतिज्ञानादित्याशयेनाह । पूर्वसवर्णः स्यादिति । अघोषस्येत्यादि । एतेन सस्य तकार इति प्राचां ग्रन्थाः प्रत्युक्ताः । यदपीह चयो द्वितीयाः शरीत्यस्योपन्यसनं तदतिरभसात् ।

तच्छिव इति । यत्तु प्राचा तच्छिव इत्यत्र जश्त्वे कृते खरि चेत्युक्तम् । तन्न । तदो दान्तत्वेन जश्त्वोपन्यासवैयर्थ्यात् । यत्तु तत्पौत्रेणोक्तं तदो वावसानइति चर्त्वे कृते पश्चाच्छिव इत्यनेन सम्बन्धे झलां जशोन्तइति जश्त्वे खरि चेति चर्त्वमिति तदतिस्थवीयः । जश्त्वं प्रति अवसाने चर्त्वस्य अपवादत्वात् । जश्त्वे शिवशब्दानपेक्षणाच्च । भाविन्यवसानभङ्गे

---

नतु सवर्णपदमधिकं परसवर्णेत्यत्रैकार्थीभावापन्नस्यान्यत्र सम्बन्धो वक्तुमशक्यः । न च पूर्वस्येत्यस्य सम्बन्ध्याकाङ्क्षायां यत्किंचित्सम्बन्धिकल्पनापेक्षया पूर्वत्रोपस्थितार्थवाचकपदाध्याहारौचित्यात्तल्लाभः । चुटू, इत्यादावादेश्येवमेव सम्बन्धोपपत्तौ तत्र तत्र स्वरितत्वप्रतिज्ञाया वैयर्थ्यापत्तेः । न च स्वरितत्वप्रतिज्ञासामर्थ्यादेकदेशानुवृत्तिः । तोर्लीत्यत्र समुदायानुवृत्त्या तस्याश्चारितार्थ्यादित्यत आह । अनुस्वारस्येत्यादि । एकदेशे इति च । पकारमात्रे स्वरितत्वप्रतिज्ञयैव तोर्लीत्यादावनुवृत्तिसिद्धौ पुनः सकारांशे तत्प्रतिज्ञया तावतोऽंशस्य उत्तरत्रानुवृत्तिरिति भावः । तदतिरभसादिति । चयोऽभावात् । दीर्घादाचार्याणामित्युत्तरमनुस्वारस्य ययि, वा पदान्तस्य, तोर्लि, उदः स्था, झयो हो, शश्छोऽटि,ति षट्सूत्रीपाठोत्तरं झलां जश् झशि, अभ्यासे चर्च, खरि च, वाऽवसाने, अणोऽप्रगृह्यस्ये, ति पञ्चसूत्र्याः पाठे भाष्यसम्मते थस्य चर्त्वेपि तस्यासिद्धत्वाच्छर्परत्वाभावाच्चेति भावः ।

चर्त्वमिति । ततः श्चुत्वे शश्छोटीति प्रक्रियेति भावः । चर्त्वापवादत्वादिति । एवं च तत्र कृते जश्त्वाप्रवृत्तिरिति भावः । न च जश्त्वे कृते चर्त्वस्य चारितार्थ्येन तस्यासिद्धत्वादपवादत्वे न मानमिति वाच्यम् । तत्काले ऽवश्यं प्राप्तत्वेन येन नाप्राप्तिन्यायेनापवादत्वस्य सुलभतयोक्तरीतेरसम्भवात् । एतदेवाभि- [illegible] चोन्त्यात्सूत्रे भाष्ये उक्तम् । सत्यपि सम्भवे बाधनं भवतीति । अन्यथा कौण्डिन्याय तक्रमित्यनेन ब्राह्मणेभ्यो दधीति प्राप्तदधिदानस्यापि बाधो न स्यात् । तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारितार्थ्यात् । अत एवाजाद्युक्तीती-

वावसानइसस्य पूर्वमप्रवृत्तेश्च । प्रवृत्तस्य वा निवृत्तिसंभवात् । उक्तं च अकृतव्यूहाः पाणिनीया इति कृतमपि शास्त्रं निवर्तयन्तीति च । अन्यथा हरिरयमित्यत्रापि त्वदुक्तरीत्या प्रवृत्तो विसर्गः केन वार्यताम् । अथ तनोतीति तदिति क्विबन्तं ब्रूषे एवमपि जश्त्वेन दकारोस्तु । चर्त्वे कृते श्चुत्वमिति तु न न्याय्यम् । श्चुत्वं प्रति चर्त्वस्यासिद्धत्वात् । यत्तु न मु ने इत्यत्र नेति योगं विभज्यासिद्धत्वमिह नेत्याहुः । तदपि न । असिद्धत्वे ऽपि रूपसिद्धौ निर्बाधायां योगविभागस्यागतिकगतिभूतस्येहाश्रयणे प्रमाणाभावात् । आक्रंस्यतइति । आङ उद्गमनइति तङ् । स्नुक्रमोरिति नेट् ।

समसम्बन्धी विधिरिति । समकर्मकं विधानमिति तु नोक्तम् । अनुवाद्ययोरपि यथासंख्यस्येष्टत्वात् । समूलाकृतजीवेषु हन्, कृञ् ग्रह, इत्यत्र यथा ।

ङ्णोः ॥ कुक्टुकोः पूर्वान्तत्वात्प्राङ्क्साये इत्यत्र सात्पदाद्योरिति षत्वं न । सुगण्ट्साये इत्यत्र न पदान्ताद्विति ष्टुत्वं न । पुष्करे तीर्थविशेषे सीदतीति पुष्करसत् तस्यापत्यं पौष्करसादिराचार्यः । बाह्वादित्वादिञ् । अनुशतिकादित्वादुभयपदवृद्धिः ।

डः सि धुट् ॥ उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् परत्वादित्यभि-

---

यस्येति सूत्रे प्रथमद्विर्वचनोत्तरमस्य चारितार्थ्येन प्रथमद्विर्वचनस्यानेन बाधो न स्यादित्याशङ्क्य सत्यपि सम्भवे इति न्यायेन बाधकत्वमुक्तं भाष्ये । एवं च दयतेर्दिगीति सूत्रस्थकैयटादिग्रन्था असम्भवे एव बाधकतेति वार्तिकानुसारेण प्रवृत्ता अयुक्ता एवेति बोध्यमिति भावः । केन वार्यतामिति । एवं चेद्वाक्यविषये वाक्यसंस्कारपक्षेणैव साधुत्वान्वाख्यानमिति स्वीकृत्याकृतव्यूहपरिभाषा त्याज्येति चेदिष्टापत्तिरिति बोध्यम् । अन्ये तु पदसंस्कारे हरिः अस्तीति सविसर्गमपि साध्वेव सत्यमिधाने, परिभाषाया भाष्ये ऽदर्शनादित्याहुः । प्रमाणाभावादिति । योगविभागस्य भाष्ये ऽदर्शनेनाप्रामाणिकत्वादन्यत्रेत्यपि बोध्यम् ।

यथासंख्यस्येति । ख्यान्तैकदेशेन सूत्रस्य ग्रहणं बोध्यम् ।

परत्वादिति । तस्मिन्निति सूत्रापेक्षया तस्मादित्यस्य परत्वादित्यर्थः ।

मेसाह । सस्येति । सीति सप्तमीनिर्देशस्तु लाघवार्थः । षट्सन्त इति । धुटश्चर्त्वेन तकारः । यत्त्वाहुः । चयो द्वितीया इति पक्षे तस्य थ इति तन्न । चर्त्वस्यासिद्धत्वात् । अत एव धुडभावे पट्मन्त इत्यत्र टस्य ठो व । टकारनकारविसर्गाणां द्वित्वविकल्पात् षोडश । खयः शर इति सकारद्वित्वे द्वात्रिंशत् । न च तत्र चर्त्वस्यासिद्धत्वं शङ्क्यम् । पूर्वत्रासिद्धीयमद्वित्वइत्युक्तेः । न च शरोचीति द्वित्वनिषेधः शङ्क्यः तस्य सौत्रद्वित्वमात्रविषयत्वात् । अत एव शरः खय इति वार्तिकस्य वत्सः, अप्सराः, इत्युदाहरणं भाष्ये स्थितम् । धुटः परादित्वं न पदान्तादिति ष्टुत्वनिषेधार्थम् । अत एव वक्ष्यमाणस्तुगिहैव न कृतः । यत्त्वाहुः । एवमपि प्रक्रियालाघवार्थम् तुडेव कर्तुमुचित इति तन्न । चयो द्वितीया इति पक्षे थकारापत्तेः ॥ श्चुत्वं धुटि सिद्धं वाच्यम् ॥ अटतीसट्श्चोतति । इह धुण् न ।

शि तुक् ॥ शीति सप्तमी पूर्वत्र कृतार्थाया न इति पञ्चाम्याः षष्ठीं कल्पयतीत्याह । नस्येति । ननु प्रकृतो धुडेवास्तु किं तुका । मैवम् । शाश्छोटीत्यस्य हि पदान्ताज्झयः परस्य शस्य च्छ इत्यर्थ आकरे स्थितः । एवं च धुटः परादित्वात् सञ्च्छम्भुरित्यत्र च्छो न स्यात् । विपूर्वाद्रपेरौणादिके शप्रत्यये "मध्वश्चोतन्त्यभितो विरप्श" मित्यादौ यथा । अ-

---

डकारात्सकारे धुडित्यर्थे तस्मिन्नित्यस्य प्रवृत्तावुपस्थितडकारस्यागमित्वं तस्मादित्यस्य प्रवृत्तावुपस्थितसस्य तत्त्वमित्यसम्भवरूपविरोधे परत्वेन व्यवस्थेति सस्यागमित्वनिर्णय इति भावः । स्पष्टं चेदं तस्मिन्निति सूत्रे भाष्ये । लाघवार्थ इति । षष्ठ्याः प्रयोगएव कर्त्तव्ये इत्यर्थः । चर्त्वस्यासिद्धत्वादिति । अत एव तुडिति नोक्तम् । अत एव । चर्त्वस्यासिद्धत्वादेव । ननु "धुक् डः सीत्यस्तु" सप्तमी च यथाश्रुतैव, ड इति च षष्ठ्यन्तं, परमार्थतो वाक्यशक्त्यङ्गीकारेण पूर्वान्तत्वे परादित्वे वा न शक्ततावच्छेदकभेदोत आह । धुटः परादित्वमिति । श्चोततिरुपदेशे सादिः । श्चुत्वस्य धुटि सिद्धत्वे ऽपि तुक्यसिद्धत्वात्सन्, श्चोततीत्यत्र तुग्नेति बोद्धव्यम् ।

षष्ठीं कल्पयतीति । न च शीति सप्तमीनिर्देशो लाघवार्थः । द्वयोरचरितार्थत्वे

तः पूर्वान्तस्तुक् कृतः । नन्वेवं कुर्वञ्च्शेते इत्यत्र पदान्तस्येति णत्वनिषेधो न स्यादिति चेन्न । कार्यकालपक्षे बहिरङ्गत्वेन तुकोसिद्धत्वात् । यथोद्देशपक्षे स्तोः श्चुनेति योगो विभज्यते नेति वर्तते ण इति च । स्तोः श्चुना योगे णत्वं न स्यात् नकारार्थमिदम् । सकारग्रहणं वर्गग्रहणं चोत्तरार्थम् । ततः श्चुरिति । पूर्वमनुवर्तते । एवं नश्चेति सूत्रे कुर्वन्त्सीदतीत्यत्र पादान्तस्येति णत्वप्रतिषेधो धुटः परादित्वे प्रयोजनमिति प्राचां ग्रन्थोपि यथोद्देशपक्षे बोद्धव्यः । यत्तु वदन्ति । इदं प्रयोजनं बहिरङ्गपरिभाषया गतार्थत्वात्प्रत्युक्तमिति । तत्पाक्षिकम् । त्रिपादीस्थे ऽन्तरङ्गे बहिरङ्गपरिभाषेयं न प्रवर्तत इति सुदृध्युपास्य इत्युदाहरणे स्वोक्त्यासह विरुद्धं चेत्यास्तां तावत् । सञ्च्छम्भुरिति । इह श्चुत्वतुकोरसिद्धतामाश्रित्य नश्छवीति रुत्वं न शङ्क्यम् । छत्वस्यासिद्धत्वात् ।

ङमो ह्रस्वात् ॥ ङम् प्रत्याहारः । सञ्ज्ञायां च कृतं टित्त्वं सामर्थ्यात् संज्ञिभिः सम्बद्ध्यते । तेन यथासंख्यं ङुट्, णुटः नुटः प्रवर्तन्ते । नित्यग्रहणं विस्पष्टार्थम् । हे मपरे इति मय उञो वो वे, ति च विकल्पद्वयस्य मद्ध्ये पाठादेव नित्यत्वलाभात् । सुगणीश इति । ण्यल्लोपौ न स्थानिवत्पूर्वत्रासिद्धे तन्निषेधात् । ङमुटः परादित्वं कुर्वन्, नास्ते इत्यत्र णत्वप्र-

---

लाघवेनान्यविभक्त्युच्चारणं युक्तं न त्वन्यथेत्याशयात् । धुडेवास्त्विति । श्चीति च षष्ठ्यर्थे इति भावः । विरप्शमिति । छान्दसार्थमपि बहुशः सूत्रकृतो यत्नदर्शनादिति भावः । णत्वं न स्यादिति । एतद्दृष्ट्या श्चुत्वस्यासिद्धत्वं तु न, वचनसामर्थ्यादिति भावः । त्रिपाद्यां सर्वथा परिभाषा ऽप्रवृत्तौ पक्षद्वये पीदमेव समाधानम् । यथोद्देशपक्षे इति । कार्यकाले तु असिद्धत्वान्न दोषः पूर्वान्तत्वे ऽपीति भावः ।

सञ्ज्ञायाम् । ङमिति प्रत्याहाररूपायाम् । विकल्पद्वयस्य मद्ध्ये इति । विभाषामद्ध्ये च ये विधयस्ते नित्या इति पूङः क्त्वा चेति सूत्रे भाष्योक्तेरिति भावः । न च तन्मद्ध्ये पाठेन नित्यत्वकल्पने तन्मद्ध्यपतितानां नपरे न इत्यादीनामपि नित्यत्वापत्तिः । स्वरितत्वबलादनुवृत्तस्य पुनर्वाग्रहणान्निवृत्तौ कल्प्यमानायां स्वानन्तरएव तत्कल्पनेनोपपत्तावन्यत्र तत्कल्पने मानाभावात् । तस्मादुत्तरत्र वाग्रहणसामर्थ्यात्पूर्वसूत्रे एव

तिषेधार्थम् । अत एव ङमो ह्रस्वादचि द्वे इति नाम्नूत्रि । परं णत्वं प्रति पूर्वस्य सिद्धतया णत्वापत्तेरिति प्राञ्चः । यत्त्वाहुः । बहिरङ्गपरिभाषया गतार्थत्वादुभयमप्यसङ्गतमिति । तदपि पाक्षिकम् । राज्ञ इत्यत्रैव यथोद्देशे त्रैपादिके ऽन्तरङ्गे परिभाषाविरहस्योक्तत्वेन प्राचां ग्रन्थस्य सौष्ठवात् । कथमन्यथा द्विर्य त्रियं च स्वयमेवोक्तमिति दिक् । ननु परमदण्डिनाविसादौ अन्तर्वर्तिविभक्त्या पदत्वान्नुट् स्यादिति चेन्न । उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधात् । अत एव परमवाचौ, परमगोदुहौ, परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न । यत्तु प्राचा ङ्ञि च पदे इत्यतः पदे इत्यनुवर्त्याजादेः पदस्येति व्याख्यानाद् ङ्मुट् नेत्युक्तं तदनेन प्रत्युक्तम् । इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाप्यनुसर्तव्यत्वात् ।

---

वाग्रहणस्य निवृत्तिरितिभावः । तन्निषेधादिति । तस्य दोष इत्यस्य तु न प्राप्तिः । लत्वसाहचर्येणादेशणत्वस्यैव ग्रहणात् । पञ्चमीसमासस्यानित्यत्वाच्चेत्यपि बोध्यम । परादित्वमिति । ततः परस्यैच इति व्याख्यानेनेत्यर्थः । ङम इत्यस्य षष्ठ्यन्तत्वमाश्रित्य ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडजादौ पदे इत्यर्थेन पूर्वादित्वमेव कुतो न कृतम् । पदस्येति च मातुपधाया इत्यादाविवावयवषष्ठी । अजादौ पदे इत्युक्तेर्म्नो, अभ्यासे इत्यतः शतरि मननित्यादावनन्त्यस्य नेति भावः । बहिरङ्गपरिभाषयेति । नुटो बहिरङ्गतयाऽसिद्धत्वादित्यर्थः । उभयम् । ङमुटः परादित्वं द्वे, इति सूत्रकरणं च । पाक्षिकम् । कार्यकालसंबन्धि । दिगिति । दिगर्थस्तु तत्परिभाषायाञ्ज्ञापाधामभाव एव । किं च यदि यदागमा इति न्यायेनागमानामागमिधर्मवैशिष्ट्यमपि बोध्यते इति तेन नकाराद्यवयवनस्यापि पदान्तत्वाण्णत्वनिषेधसिद्धिरित्युच्यते तर्हि ह्रस्वात्परस्य ङमन्तपदस्याचि परे ङमुडित्येवार्थस्तथासति स्याश्च प्रागुक्तमतिमहदनिष्टमिति । स्पष्टं चेदं सर्वं भाष्ये । प्रत्ययलक्षणप्रतिषेधादिति । इदं च प्रकृतसूत्रे भाष्ये स्पष्टम् । अनुसर्तव्यत्वादिति । यदि तु स निषेधो ऽपदादिविधाविति पर्युदासेन पदान्तत्वनिमित्तके विधावेवेति न लुमतेति सूत्रे भाष्ये स्पष्टम् । किं चोत्तरपदस्य कार्यित्वे एव तत्प्रवृत्तिरत एव माषकुम्भवापेनेत्यादौ पदव्यवायेपीति निषेधसिद्धिरित्युच्यते तदा प्राचीनोक्तमजादेः पदस्येति व्याख्यानमेव शरणम् । स्पष्टं चैवं व्याख्या-

समः सुटि ॥ यद्यपि मोनुस्वारेण सिद्धं तथाप्यनुनासिकत्वत्रिसकारत्वसिद्ध्यर्थमिदम् ।

अत्रानुनासिकः ॥ अयमधिकारो विधिर्वेति द्वैतम् । आद्ये ऽत्रग्रहणमनर्थकम् । अधिकारादेव रुमकरणलाभात् । तुशब्दस्त्वधिकारपक्षे परस्मात्कार्यिणो विशेषद्योतनार्थः परस्य नित्यं रुत्वं पूर्वस्य तु वा ऽनुनासिक इति । विधिपक्षे व्यर्थः । वाग्रहणं स्पष्टार्थम् । अनुनासिकात्पर इति ज्ञापकादेव सिद्धेः । न हि विकल्पं विना ऽनुनासिकाभावपक्ष इति सम्भवति । इदमेव ध्वनयितुं वृत्तौ तु वेति शब्दौ नोक्तौ ।

अनुनासिकात् ॥ ल्यब्लोपे पञ्चमीत्याह । अनुनासिकं विहायेति । एवं च संसर्गवद् विप्रयोगस्यापि विशेषावगतिहेतुत्वादवत्सा ऽऽनीयतामित्यत्रेव सम्भावितानुनासिक्यगुणक एव उपस्थितत्वादाकाङ्क्षितत्वाच्चावधित्वेन सम्बध्यतइत्यभिप्रेत्याह । रोः पूर्वस्मादिति । अनुस्वारागम इति । आगमत्वं च परशब्देनैव लभ्यते पूर्वौ तु ताभ्यामैजित्यत्र पूर्वशब्देनेवोरिवेति भावः ।

---

नं प्रकृतसूत्रे " ञमि च पदे " इत्यत्र च भाष्ये । तेन निषेधेन सिद्धमिति प्रकृतसूत्रभाष्योक्तिस्त्वेकदेशिन इत्यास्तां तावत् ।

त्रिसकारकत्वेति । न च पुनर्द्वित्वेन तदपि सिद्धम् । लक्ष्ये लक्षणस्येति न्यायात् । अत्र चेदमेव ज्ञापकं बोद्धम् ।

अनर्थकमिति । इदमुपलक्षणं प्रतिसूत्रमावृत्तौ गौरवं चेत्यपि बोद्धम् । स्पष्टार्थमिति । अनेन तुग्रहणमधिकारपक्षेपि परस्य रुत्वतः पूर्वस्यानुनासिक इत्यर्थस्य स्पष्टं बोधनार्थं वाशब्दवदिति सूचितम् । विधिपक्षे ऽत्रग्रहणं तु एतद्प्रकरणं इत्यर्थलाभार्थम् । वस्तुतोऽत्राधिकारत्वमेवोचितम् । मतुवसोरुरिति सूत्रे कृतयो " वंन उपसंख्यानं " विभाषा भवदित्यनयोरुदाहरणे भाष्ये ऽनुनासिकाद्यनुच्चारणात् । विधित्वे तु तत्र प्रवृत्तिर्दुर्वारैव । अधिकारत्वे तूत्तरत्रैव प्रवृत्तिः । स्पष्टं चेदं वृत्ताविति तत्त्वम् ।

ल्यब्लोपे इति । दिग्योगलक्षणा तु न । अत्रानुस्वारपरानुनासिकः पूर्वस्य तु वेति न्यासेन सिद्धावनुनासिकात्पर इत्यस्य वैयर्थ्यापत्तेरिति भावः । परश-

विसर्जनीयस्य ॥ खरीति । एतच्च मण्डूकप्लुत्या खरवसानयोरिति सूत्रादनुवर्तते । नन्वनुस्वारस्यानच्त्वात्ततः परस्य द्वित्वं न स्यादेवेत्यत आह । अनुस्वारविसर्गेत्यादि । अकारोपरीति । यदि त्विकारोपरि पठ्येरन् तर्हि पयःसु, यशः, सु, इत्यादौ इणः परस्येति षत्वं स्यादिति भावः । अच्त्वादिति । न चैवं हरिः कर्त्ता, हरिं स्मरेदित्यादौ यणादिप्रसङ्गः । त्रिपादीस्थत्वेन विसर्गादीनामसिद्धत्वात् । अनुस्वारस्यापि द्वित्वइति । अपिशब्दात्ककारस्य । वचनान्तरेणेति । अचो रहाभ्यामिति कृतेऽपि यणो मय इति भवत्येवेति भावः ।

पुमः खयि ॥ पुंसः संयोगान्तलोपे कृते ऽवशिष्टभागस्येदमनुकरणम् । पर्युदासादिति । इदुदुपधस्येति षत्वविधायके सूत्रइति भावः । अप्रत्ययस्य यो विसर्ग इति वैयधिकरण्येन व्याचक्षाणानां प्राचां मतेनेदम् । वक्ष्यमाणरीत्या सामानाधिकरण्येनान्वये तु षत्वप्राप्ताविति बो-

---

द्धेनैवेति । प्रसिद्धावेवकारः ।

मण्डूकेति । एकदेशे स्वरितत्वप्रतिज्ञयेत्यपि बोध्यम् । अत एवावसाने न सः । पूर्वेण संनिकर्षरूपा संहिता त्ववसाने ऽप्यस्त्येव । अत एव संहिताधिकारे ऽवसानकार्यपाठः संगच्छते । षत्वं स्यादिति । अत एव पुंस्वित्यादावुकारं निमित्तीकृत्यानुस्वारव्यवधाने षत्वमाशङ्क्य नुम्स्थानिकानुस्वारस्यैव नुम्विसर्जनीयेति सूत्रे ग्रहणान्नेति भाष्यं संगच्छते । इकाराद्युत्तरं पाठे हि अनुस्वारमिणं गृहीत्वा षत्वं दुर्वारं स्यादिति भावः । यणादीति । पूर्वसवर्णदीर्घ आदिशब्दार्थः । अयं पाठो ऽनित्यः । अट्कुपिति सूत्रे ऽनुस्वारोपलक्षणनुम्ग्रहणात् । अत एव हरिं जयतीत्यादौ झलां जश् झशीति नेति बोध्यमिति कश्चित् । भवत्येवेति । एकस्य द्वितीयोच्चारणस्यैकेन साधुत्वबोधनं तयोर्मध्ये परस्य द्वितीयोच्चारणस्यान्येन साधुत्वबोधनमिति भावः ।

वक्ष्यमाणरीत्येति । प्रत्ययरूपो यो विसर्ग इति व्याख्यादर्शरीत्येत्यर्थः । वस्तुतस्तदसङ्गतम् । कविभिः कृतमित्यादौ दोषापत्तेः । एतच्चान्वये त्विति तुना ऽरुचिबोधकेन सूचितम् । यदा तु सूतेः सस्य षकारोऽन्त्यस्य ह्रस्वो म्सुः प्रत्यय इति क्रियामिति सूत्रभाष्यकैयटोक्तव्युत्पत्तिस्तदा सस्य लोपे मस्यैव प्रत्ययत्वमिति व्याख्यादर्शोक्तसामानाधिकरण्ये ऽपि षत्वाप्राप्तिरेव । पातेर्डुम्सुन्नि-

द्धध्यम् । ख्याञादेशइति । आदेशो हि उपदेशे ख्शादिः । असिद्धप्रकरणे णत्वानन्तरं ख्शाञः शस्य यत्वं विकल्प्यते । तेन सुप्रख्येन निर्वृत्तं सौप्रख्यं तत्र भवः सौप्रख्यीयः । यत्वस्यासिद्धत्वाद्धन्वयोपधाद्विति बुञ्नेत्यादिप्रयोजनान्याकरे स्थितानि । एवं च यत्वस्यासिद्धतया ऽम्परत्वाभावात्पुमः खयीति रुत्वं नेत्यर्थः । पुंख्यानमिति । चक्षिङो ल्युट् । ख्याञादेशः । नन्वादेश इह दुर्लभः । वर्जने प्रतिषेधः असनयोश्चेति वार्तिकादिति चेन्न । सत्यम् । बहुलं तण्यन्नवधकगात्रविचक्षणाजिराद्यर्थमिति वार्तिके बहुलग्रहणात्समाधेयम् । तथा च ख्शादित्वप्रयोजनगणनवार्तिकम् । रुविधिः पुंख्यानमिति । णत्वं पर्याख्यानमिति । निष्ठानत्वमाख्यातं इति च । शकारेण व्यवधानात् क्सच इति णत्वं न । तथा अख्यातमित्यत्र संयोगादेरात इति नत्वं न । यत्वस्यासिद्ध्या यण्वत्त्वाविरहात् । एवं च न दृध्याख्येति सूत्रे ख्याग्रहणं न कर्तव्यमिति भावः । न च ख्याप्रकथने, इत्येतदर्थं तदिति वाच्यम् । तस्य सार्वधातुकमात्रविषयत्वात् । अत्र च सस्थानत्वं नमः ख्यात्रे इत्युत्तरवार्तिकं प्रमाणम् । सस्थान इति जिह्वामूलीयस्य प्राचां सञ्ज्ञा । स इह न । शर्परे विसर्जनीय इत्यस्य प्रवृत्तेरिति भावः । यदि स्वतन्त्रोऽपि धातुरार्द्धधातुके इष्येत तदा जिह्वामूलीयस्य दुर्वारतयेदं वार्तिकमसङ्गतं स्यात् । यत्तु हरदत्तमाधवादिभिरुक्तं ख्याधातुरपि ख्शादिर्यत्वविधिरप्युभयसाधारण इति । तच्चिन्त्यम् । भाष्ये चक्षिङ एवोपक्रमात्सार्वधातुके ऽपि ख्शादिप्रयोगापत्तेश्च । न चेष्टापत्तिः । माधवेनार्द्धधातुकेष्वेवायं ख्शादिरित्युक्तत्वात् । सार्वधातुके ऽनभिधान-

---

ति व्युत्पत्तिमादाय तु मूल मिति दिक् । शकारेणेति । यत्वासिद्धत्वादिति भावः । न कर्तव्यमिति । यत्वासिद्ध्या यण्वत्त्वाविरहेण नत्वाप्राप्तेरिति भावः । अत्र चेति । ख्यातेः सार्वधातुकमात्रविषयत्वे इत्यर्थः । सञ्ज्ञेति । एवं च तदुत्तरभावप्रत्ययेन सस्थानशब्द उच्यते । तेन स्थवाच्यो जिह्वामूलीयो वार्त्तिके लक्ष्यते । कुत्वं कस्मान्न भवतीत्यत्रैवेति भावः ।

स्यैव शरणीकर्तव्यत्वापत्त्या गौरवग्रस्तत्वाच्चेत्यास्तां तावत् । स्यादेतत् । बहवः पुमांसोऽस्मिन् कुले बहुपुम् ख्यातीत्यत्र रुत्वं स्यात् । उरःप्रभृतिषु पुम्शब्दस्यैकवचनान्तस्यैव पाठान्नेह कप् । सार्वधातुके च ख्यातेः प्रयोगो निर्बाध एवेति चेत् । इष्टापत्तेः । संहिताया अविवक्षायां तु रुत्वं नेति स्पष्टमेव । यत्तु प्राचा ख्याधातौ नेति केचिदित्युक्तं तत्र यदि ख्याञादेशे इत्यर्थस्तर्हि केचिदित्यनुचितम् । स्वतन्त्रे धातौ चेत्तर्हि सार्वधातुकविषये ऽपि निषेधः स्यात् । न चेष्टापत्तिः । निर्मूलत्वात् । चक्रिँस्त्रायस्वेति । यत्तु प्राचा त्राहीत्युक्तं तत्र परस्मैपदमयुक्तम् । त्रायतेर्ङित्त्वात् । त्रायतइति त्राः स इवाचरेत्यर्थे कर्तरि क्विबन्तादाचारक्विपि वा बोद्धव्यम् । प्रशानिति । प्रपूर्वाच्छाम्यतेः क्विप् । अनुनासिकस्य क्वीति दीर्घः । मो नो धातोरिति नः । तस्यासिद्धत्वान्नलोपो न ।

नॄन्पे ॥ पकारोपर्यकार उच्चारणार्थः । तेन नॄः पुनातीत्यादि सिद्धम् । उभयथर्क्ष्वित्यतं उभयथेत्यनुवृत्तेर्विकल्पः फलित इत्याशयेनाह । रुः स्याद्वेति ।

कुप्वोः ॥ सूत्रे खर्परत्वाद्विसर्गः । जिह्वामूलीयस्य खत्वात् खर्परे

---

ख्शादीति पाठे प्रयोगे चर्त्वप्रवृत्तिरिति भावः । इत्युक्तत्वादिति । एवं च माधवो नेष्टापत्तिं कर्तुमर्हं इत्यर्थः । अनभिधानस्यैवेति । ख्शादेरनभिधानस्यैवेत्यर्थः । गौरवेति । ख्शादित्वं स्वीकृत्यानभिधानस्वीकारापेक्षया तदस्वीकृत्यैव ख्यातेरार्धधातुके ऽनभिधानस्यैव स्वीकारे लाघवमिति भावः । रुत्वमित्युपलक्षणं जिह्वामूलीयस्य षत्वस्य च । नमः ख्याति, निख्यातीत्यादौ । त्रायतेर्ङित्त्वादिति । अत्र त्रायते इत्युक्त्या सत्यपि परस्मैपदे त्रायेत्यस्य प्राप्त्या त्राहीत्यस्यासिद्धिः सूचिता । आचारक्विपि चेति । नामधातौ मूलधात्वादेर्ङित्त्वाद्याश्रित्यानुदात्तङित इत्यादेः प्रवृत्तिर्नेत्यभिमानः । अत एव त्राहि मां पुण्डरीकाक्षेति संगच्छते इति भावः । आर्षं तत्र तदित्यन्ये । शाम्यतेरिति । न तु शान, तेजने इत्यतस्तस्य पदान्ते नलोपेन नान्तत्वासंभवादिति भावः । न चाप्रशानिति पर्युदासेन नान्तग्रहणेन सिद्धे न, इति व्यर्थमिति वाच्यम् । अस्य लक्षणावशसंपन्ननान्तत्वेन पर्युदासेनापि लक्षणवशसंपन्नकारान्तानामेवापत्तेः ।

शरीति विसर्गस्य लोपः। जिह्वामूलीयस्य शर्वाद्‌ वा शरीति विसर्ग एव वा। आदेशयोः कपावुच्चारणार्थौ। चाद्विसर्ग इति। यत्तु प्राचा चाद्विकल्प इत्युक्तं तन्न। ᳲक ᳲपाभ्यां मुक्ते विसर्गस्य सत्वप्रसङ्गात्।

कानाम्रेडिते॥ कान्कानीति वाच्ये आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यादिह मा भूत्। कान् कान् पश्यसि । अत्रैकः किंशब्दः प्रश्ने द्वितीयः क्षेपे। कान् कुत्सितान् पश्यसीत्यर्थः।

कस्कादिषु च॥ अत्र प्राचा विसर्जनीयस्य ᳲक ᳲपौ नेत्युक्तं नासौ सूत्रार्थः। ᳲकं ᳲपयोरस्वरितत्वात्। नञश्चाप्रकृतत्वात् । किं त्वार्थिकार्थकथनं तदिति ध्वनयन्नाह । ᳲक ᳲपयोरिति। कौतस्कुत इति। कुतः कुत आगत इत्यर्थे ऽव्ययात्त्यपि प्राप्ते गणपाठसामर्थ्यादण्। सर्पिष्कुण्डिकेति। नित्यं समासइत्येव सिद्धे इह पाठस्य प्रयोजनं तु तत्रैव वक्ष्यते। सेनासुरेति। यदि हि च्छस्य तुक् स्यात् तर्हि च्छस्य चर्त्वे सति चद्वयं स्यात्। सन्निपातपरिभाषया चर्त्वाप्रवृत्तौ तु च्छकारोपरि चकारः श्रूयेतेति भावः॥ इति हल्सन्धिः॥

---

ननु कुप्वोरित्यत्र जिह्वामूलीयस्य खर्वाद्विसर्गे तस्य सत्वे सश्रवणापत्तिरत आह। सूत्रे इत्यादिशर्वादित्यन्तेन । विसर्गलोपश्च सत्वापवादः। एवं च सूत्रे निर्विसर्गपाठ इति भावः । सविसर्गपाठे ऽप्याह। वा शरीति। स च सत्वापवादः। खर्परइति च वैकल्पिकमिति भावः। उच्चारणार्थाविति । तयोरुच्चारणस्य तौ विना ऽसंभवेन नान्तरीयकतया तयोरुच्चारणं न तु तयोर्विधेयत्वम्। किं तु तन्मात्रे तयोर्लक्षणा व्याख्यानादिति भावः। चाद्विकल्प इति। निपातानामनेकार्थत्वाच्चशब्दो विकल्पार्थ इति तदाशयः । सत्वप्रसङ्गादिति। चानुकृष्टविसर्गस्तु सत्वापवाद इति नास्माकं दोष इति भावः । गणपाठसामर्थ्यादिति । एतेन पञ्चम्यन्तात्स्वार्थे तसिल्विधानेनाव्ययात्उत्सर्गतः प्रथमैकवचनोत्पादेन पञ्चम्यन्तत्वाभावात्तत आगत इत्यर्थे कथमणित्यपास्तम् । अव्ययानामिति टिलोपः। संनिपातेति । असिद्धविषये ऽपि सा प्रवर्तते । यद्वा पूर्वत्र कर्तव्ये ऽसिद्धत्वे ऽपि तत्र कृते उत्तरस्यासिद्धत्वे मानाभाव इति नासिद्धत्वेन सन्निपातपरिभाषाप्रवृत्तिप्रतिबन्धः शङ्क्य इति भावः । वैकल्पिकेष्वपि भावानुष्ठानस्यैवौचित्यं फलाधिक्यायेति तात्पर्यम्॥ इति हल्सन्धिः॥

शर्परे ॥ सत्वादेरयमपवादः । यदि तु शर्परे नेत्येवोच्येत तर्हि प्रकृते सत्वे निषिद्धे ऽपि कुप्वो ᳲकᳲपौ स्याताम् । वासः क्षौममद्भिः प्सातमिति । विसर्जनीयवचनात्तु विकारमात्रं बाध्यते इत्याशयेनाह । न त्वन्यादिति । तदेव स्फुटयति । इहेति ।

सोपदादौ ॥ अपदाद्योरिति । सूत्रे तु व्यत्ययेनैकवचनम् । यदि तु खर् विशेष्यते ऽपदादौ खरीति तदा यथाश्रुतं साधु । किं तु खरीति मण्डूकप्लुत्या ऽनुवर्त्यमिति क्लेशः । न चानुवृत्तेरुत्तरत्राप्यावश्यकता । खरं विना विसर्गस्य दुर्लभत्वेन तदनुवृत्तेर्निष्फलत्वात् । पाशकल्पककाम्येष्विति वृत्तिः । सम्भवप्रदर्शनमेतन्न तु परिगणनम् । अन्यस्यासम्भवात् । प्रातःकल्पमिति । अधिकरणशक्तिप्रधानस्यापि प्रातःशब्दस्येह वृत्तिविषये शक्तिमत्परत्वम् । दोषाभूतमहः, दिवाभूता रात्रिरिति वत् । गोःकाम्यतीति । इहेणः ष इति षत्वं न । तत्रापि काम्ये रोरेवेत्य-

---

नेत्येवोच्यतेति । कुप्वोरित्यत्रापि खेन सत्वं नेत्येवानुकृष्टव्यमिति भावः । स्यातामिति । सत्वनिषेधे खरवसानयोरिति विहितविसर्गस्य सत्वादिति भावः । विकारमात्रमिति । तत्सामर्थ्याच्चेन तस्यैव प्रत्यापत्ताविति न ताविति भावः । एतेनैतद्विहितस्य स्थाने ऽपि तौ स्याताम् । किं चास्यैव तौ स्यातां खरवसानयोरिति विहितस्य त्वेतयोरसिद्धत्वाद्विसर्जनीयस्येति सत्वमेव स्यादित्यपास्तम् । अर्थाधिकारेण खरवसानयोरिति विहितविसर्गस्यैवादेशाच्च । विसर्जनीयस्य सोशर्परे, इति तु न सूत्रं कृतम् । वा शरीत्यनेन सत्वस्य विकल्पेन सिद्धावपि कुप्वोरित्यत्राशर्परे इत्यनुवृत्त्या तयोः शर्परे ऽप्रवृत्तावपि कुप्वोरिति सूत्रे चाद्विसर्गलाभानापत्तेः ।

व्यत्ययेनेति । सौत्रत्वादिति भावः । इति क्लेश इति । किं च पूत्तरेत्यादौ षत्वादिवारणाय कुप्वोरित्यनुवर्त्यं तदन्तर्गते खरीति व्याख्याने सुतरां क्लेश इत्यपि बोध्यम् । अन्यस्यासंभवादिति । अयं भावः । अपदे इत्येव कुप्वोरित्यनुवर्त्यं यस्मिन्विधिरिति परिभाषया कपवर्गादौ अपदे इत्यर्थेन सिद्धे आदिग्रहणमपदस्यैवादिरित्यर्थलाभार्थम् । तेनोरः कायतीति विग्रहे सुबुत्पत्तेः पूर्वं समासे ऽप्युरःकेणेत्यादौ न सत्वम् । आदिग्रहणसामर्थ्येन तल्लब्धावधारणेन च पदत्वयोग्यप्रातिपदिकानवयवस्यैव ग्रहणादिति । शक्तिमत्परत्वमिति । अव्ययत्वं तु भूतपूर्वगत्या बोध्य-

स्यानुवृत्तेः। यदि तु तत्रैवेदं पठेत तर्हि षत्वमात्रप्रतिषेधे ऽपि पूर्वेणस-त्वं स्यात्।

इणः षः॥ पूर्वस्यापवादः। इदं सूत्रं स इति च द्वयमपि उत्तरत्रा-नुवर्तते तेन यथासंभवमिणः परस्य षोन्यस्य स इति विवेकः। पुरः प्रष्ठ-व्या इति। पॄ, पालनपूरणयोः। भ्राजभासेत्यादिना क्विप्। तदन्ताज्ज-स्। जसन्ततां स्फुटीकर्तुं पूः पुरावित्युपन्यस्तम्।

इदुदुपधस्य॥ इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विस-र्जनीय इति वैयधिकरण्येन संबन्धः। अप्रत्ययस्येति तु अप्रत्ययो यो वि-सर्ग इति संबद्ध्यते। संभवति सामानाधिकरण्ये वैयधिकरण्यस्या-न्याय्यत्वात्। न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम्। अ-ग्निः करोतीत्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः। न चातिदेशं प्रति त्रिपा-द्या असिद्धत्वं शङ्क्यम्। अप्रत्ययस्येति निषेधेनैव सिद्धत्वज्ञापनात्। अत एवाग्निरित्यादौ रोर्विसर्गः सिद्ध्यति। अन्यथा अपदान्तत्वान्न स्यात्। विसर्गविधिस्तु पुनरित्यादौ चरितार्थः। ज्ञापकं च विशेषापेक्षम्।

---

मिति भावः। षत्वं नेति। सत्वं नेत्यपि बोद्ध्यम्। तत्रापि। षत्वविधावपि। एवं चात्र पाठात्तत्रानुवृत्तेश्चोभयमपि नेति बोद्ध्यम्।

समुदायस्येति। अलोन्त्यादिति सूत्रे अवयववाचकान्त्यशब्देन स-मुदायस्याक्षेपेण उपधात्वस्य समुदायनिरूपितत्वादिति भावः। इदुदुपध-स्य विसर्गान्तस्य पदस्येति सामानाधिकरण्येनान्वयः। षत्वं त्वलोन्त्यस्ये-त्यनेन विसर्गस्येत्यन्ये। व्याख्यादर्शोक्तरीत्या ऽऽह। अप्रत्ययो य इति। तत्प्रसिद्धेरिति। विसर्गस्य प्रत्ययत्वप्रसिद्धेरित्यर्थः। न स्यादिति। रो-रसुप्त्वेन पदत्वाप्रवृत्तेरिति भावः। चरितार्थ इति। ननु तत्रापि पुन-रित्यवस्थायां जातपदत्वस्यातिदेशेनैव सुलोपे कृते आनयनमिति को विशेषः। न चैकदेशविकृतन्यायेन सिद्धिः। अग्निरित्यत्रापि समत्वात्। न चाग्निरित्य-त्रादेशस्यातिदेशलभ्यकार्यस्य चासिद्धत्वमत्र तल्लभ्यकार्यस्यैवेति विशेष इति वाच्यम्। सर्वथा ऽतिदेशापेक्षणेन तस्याकिंचित्करत्वात्। किं च कृत्वासिद्धत्वेनाग्निरित्यत्र पदत्वं सुलभम्। किं च विसर्गस्यान्यल्लरूपरे-फवृत्तिप्रत्ययत्वस्य स्थान्यल्धर्मत्वेन तदतिदेशाप्रवृत्तिरिति प्रत्ययरूपो विस-

तेनाचः परस्मिन्निति त्रिपाद्यां न प्रवर्तते । एवं च पूर्वत्रासिद्धे न स्थानिवदिति सिद्धान्त उक्तयुक्तिमूलको न तु वाचनिक इति प्रपञ्चितं शब्दकौस्तुभे ऽस्माभिः । नन्वेवं मातुः कार्यमित्यादौ षत्वं स्यादिति चेन्न ।

---

र्गो दुर्लभः । स्पष्टा चेयं रीतिर्भोभगो, इति सूत्रे भाष्ये । किं चैवं सामानाधिकरण्ये ऽसोरिति वक्तव्ये ऽप्रत्ययग्रहणं व्यर्थंस्यात् । किं चैवं नित्यं समासे इति सूत्रे ऽनुत्तरपदस्थस्येत्यस्य वैयर्थ्यम् । परमसर्पिःकुण्डिकेत्यादावन्तेन षत्वस्य दुर्वारत्वात् । किं चैवं "नित्यं समासे" इति सूत्रस्थभाष्यासंगतिः । तथा हि । अथाव्युत्पन्नं प्रातिपदिकं सर्पिरादि ततो नित्ये प्राप्ते "इसुसोः सामर्थ्ये" इति विभाषा आरभ्यतइति तत्रोक्तम् । प्रत्ययत्वपर्याप्त्यधिकरणभिन्नस्येत्यर्थे तु व्युत्पत्तिपक्षे ऽपि नित्यषत्वप्राप्तेरथाव्युत्पन्नमित्यादेरसंगतिः स्पष्टैव । अत्र भाष्यं ऽथेति यद्यर्थे । तेन सर्पिषा यजुषेत्यादौ षत्वसिद्धये व्युत्पत्तिपक्ष एव न त्वस्माविति सूचितम् । तस्मादत्र प्रत्ययपदं तत्संबन्धिपरं प्रत्ययसंबन्धिभिन्नस्य विसर्गस्येत्यर्थ उचितः । अत एव कविभिः कृतमित्यादौ न दोषः । "नित्यं समासे" इति सूत्रस्थानुत्तरपदस्थस्येत्यस्य कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्य चैतदर्थज्ञापकतैवाचितेति चेत्सत्यम् । व्याख्यादर्शानुसारेणैतद्ग्रन्थसत्त्वात्तद् ध्वनयन्वक्ष्यति । नातीवादर्त्तव्यमिति । न प्रवर्ततइति । अत एव तिरश्चेत्यादौ सस्य श्चुत्वसिद्धिः । एतच्चेष्टानुरोधेन संयोगादिलोपलत्वणत्वातिरिक्तविषयं तेन तत्र स्थानिवत्त्वं भवत्येवेति तस्य दोष इत्याद्यपि न वाचनिकमिति भावः । मातुः कार्यमिति । सिद्धान्तव्याख्याने ऽप्यत्र दोषः । तथा हि । सकारसन्निधावकारो नैव प्रत्ययः समुदायनिवेशित्वात्प्रत्ययत्वस्येति तदादेशस्योरः प्रत्ययत्वाभावेन विसर्गस्य तत्संबन्धित्वाभावात् । यस्तूत्वे कृते ऽवशिष्टः सकारः प्रत्ययसञ्ज्ञकः स लुप्त एव । न चान्तादिवच्चेत्यस्य पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां ये व्यवहाराः प्रत्ययत्वादयस्ते एकादेशविशिष्टस्यापीत्यर्थादुरसित्यत्र प्रत्ययत्वस्य सुलभतया एकदेशविकृतन्यायेनोरित्यस्य प्रत्ययतया न दोष इति वाच्यम् । त्रिपाद्या असिद्धत्वेन तत्रान्तवत्त्वाप्रवृत्तेः । स्थानिवत्त्वेन तु न निर्वाहः । उपात्तस्य स्थानिनो ऽकारस्य प्रत्ययत्वाभावात् । प्रत्ययसंबन्धित्वं तु न स्थानिवत्त्वलभ्यमशास्त्रीयत्वात् । सर्वे सर्वपदादेशा इति न्यायेन मात्, अासित्यस्य स्थानित्वेप्यासित्यस्य स्थानित्वालाभेनोर्सित्यस्य प्रत्ययत्वमलभ्यमिति । एतदेवाभिप्रेत्य प्रकृतसूत्रे उरण् रपर इति सूत्रे च भाष्ये उक्तमिह कस्मान्न भवति "पितुः

कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठेन ङसिङसोरत उकारात्परस्य सस्य षत्वं नेति ज्ञापनात् । एवं चाप्रत्ययस्येत्येतदपि व्यधिकरणमेवेति हरदत्तेनोक्तं नातीवादर्तव्यम् । मातुरिति । अत्र हि ऋत उदित्येकादेशशास्त्रं विसर्गं प्रति परम्परया प्रयोजकम् । आकरे त्वेकादेशशास्त्रनिमित्तादिति प्रचुरः पाठः । तत्र एकादेशशास्त्रं निमित्तं यस्य उकारस्य तस्मादित्यर्थः ।

मुहुःकामेति । इह कुप्वो ≍ क ≍ पाविति प्रवर्तते । वृत्तौ मुहुस्कामेति सकारः क चित् पठ्यते तत्प्रामादिकमिति हरदत्तः ।

द्विस्त्रिश्चतुरिति ॥ इह द्वित्रिभ्यां सुजन्ताभ्यां साहचर्यात् चतुःशब्दोपि सुजन्त एव ग्रहीष्यते । कृत्वोर्थग्रहणं ज्ञापकम् । साहचर्यं न

---

करोति,, अप्रत्ययस्येति षत्वं प्राप्नोति अप्रत्ययविसर्जनीयस्येत्युच्यते प्रत्ययविसर्जनीयश्चायं लुप्यते ऽत्र प्रत्ययविसर्जनीयो रात्सस्येति । लुप्यते ऽत्रेत्यादेरयमर्थः । प्रत्ययविसर्जनीयत्वेन यस्त्वाभिमतः स लुप्यते न दृश्यते स्थानिनः प्रत्ययस्यैव लोपादिति बोद्धव्यम् । ज्ञापनादिति । त्रिपाद्यामप्यन्तवत्त्वप्रवृत्तिज्ञापनद्वारेति भावः । अत एवामी क्षीरपणेत्यादौ भीत्वणत्वे सिद्ध्यतः । अत्रैकारस्यादस्संबन्धित्वं पे इत्यस्यैकाज्युत्तरपदत्वं चान्तवद्भावाधीनमिति बोद्धव्यम् । व्यधिकरणमेवेति प्रत्ययस्य संबन्धी यो विसर्गस्तस्य नेत्यर्थ इति तद्भावः अगत्या च वाक्यभेदाऽसमर्थसमासवैयकरण्यान्वयरूपदोषत्रयसहनमिति तदभिमानः । नातीवेति । वैयधिकरण्यान्वयफलस्य कविभिः कृतमित्यादेः प्रत्ययसंबन्धिभिन्नस्य विसर्गस्येत्येवं लक्षणया सामानाधिकरण्येनापि संग्रहसंभवादिति भावः । व्याख्यादर्शोक्तसामानाधिकरण्ये तु लेशतोपि तदादराभावादतीवेत्यसंगतमेव स्यादिति । अनेनोक्तव्याख्याया एव स्वाभिमतत्वं सूचितवानित्यलम् । परम्परयेति । एकादेशशास्त्रसंपन्नरेफस्थानिकत्वेन विसर्गस्यैकादेशशास्त्रनिमित्तकत्वमिति भावः । प्रचुरः पाठ इति । ओषधीस्कृधीत्यादौ शसैकादेशे कः करत्करतिकृधीति षत्वनिवृत्तिश्च तत्फलमुक्तम् । मूले तु तस्य फलस्य च्छान्दसत्वाच्छन्दसि वा प्रेत्यतः इणः ष इत्यस्य निवृत्त्याऽदोषाच्च षष्ठ्यन्तमेव पठितमिति दिक् ।

प्रामादिकमिति । पदादित्वेन सोपदादावित्यस्याप्राप्तिरिति भावः । साहचर्यमिति । न च रामलक्ष्मणावित्यादौ दृष्टसाहचर्यसंबन्धस्याभिधानियाम-

सर्वत्र व्यवस्थापकमिति । तेन दीधीवेवीटामित्यत्र धातुसाहचर्ये ऽपि आगमस्येटो ग्रहणम् । उभयत्र विभाषा चेयम् । चतुरित्यस्येदुदुपधस्येति प्राप्ते इतरयोस्त्वप्राप्ते । न च तयोरपि " इसुसोः सामर्थ्ये " इत्यनेन सिद्धिः शङ्क्या । इसः प्रत्ययस्य अर्थवतश्च तत्र ग्रहणात् । चतुष्कपाल इति । इदुदुपधस्येति नित्यं षः । व्यपेक्षाविरहे ऽपीति । तिष्ठतु सर्पिष्कुण्डिकामानयेत्यादावित्यर्थः । व्यपेक्षयामिति । इदं सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः । यत्तु परायणिका आहुः । कस्कादिषु सर्पिष्कुण्डिकादीनां पाठ उत्तरपदस्थत्वे ऽपि षत्वार्थ इति तद्भाष्यविरोधादुपेक्ष्यम् । अयःसहितेति । न त्वयसो विकारः । जानपदेति ङीष्प्रसङ्गात् । अयस्कर्णीति । अय इव कर्णौ यस्याः । नासिकोदरौष्ठेत्यादिना ङीष् ।

अधःशिरसी ॥ एतयोरिति । सूत्रे तु षष्ठ्याः स्थाने प्रथमा बोद्धव्या । अधस्पदमिति । मयूरव्यंसकादित्वात्समासः । शिरस्पदमिति । षष्ठी समासः ॥ इति विसर्गसन्धिः ॥

---

कत्वं दृष्टम् । न चैषां क्वापि साहचर्यसंबन्धो गृहीत इति कथमेतदिति वाच्यम् । पञ्चम्यपाङ्परिभिरित्यनेन लक्षणादिद्योतकपरियोगे पञ्चमीशङ्कायां यद्यप्ययं परिर्दृष्टापचारो वर्जने चावर्जने चायं खल्वपशब्दो ऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्य कः सहायो भवितुमर्हति अन्यो वर्जनार्थात् । यथा ऽस्य गोः सहायेनार्थ इति गौरेवानीयते नाश्वो न गर्दभ इति कर्मप्रवचनीययुक्तइति सूत्रस्थभाष्येण सदृशानामेव प्रयोगे सहायत्वमित्यर्थस्य प्रतिपादनेनाक्षतेः । परिभाषायां सहचरितशब्देन सदृशस्यैव ग्रहणं सहचरस्य भावः साहचर्यम् । सहचरणं च सदृशयोरेवेति साहचर्यशब्देन सादृश्यमुच्यते । सदृशयोरेव सहविवक्षा तयोरेव च सह प्रयोगः । रामलक्ष्मणावित्यादावपि सादृश्यमेव नियामकमिति दिक् । अर्थवतश्चेति । प्रतिपदोक्तस्य चेत्यपि बोद्धयम् । नित्यं ष इति । भाष्यप्रामाण्येनाव्युत्पत्तिपक्षस्यैवाङ्गीकारेण व्युत्पत्तिपक्षे प्रत्ययसंबन्धित्वात्कथं षत्वमिति न शङ्क्यम् । अत एव चतुष्पाद्भ्यो ढञित्यादिनिर्देशसंगतिः । इत्यर्थ इति । अत्रत्यन्तत्त्वं पूर्वं सूचितम् । तद्भाष्येति । अनुत्तरपदस्थस्येति किं परमसर्पिःकुण्डिकेति "नित्यं समासे" इति सूत्रस्थभाष्ये इत्यर्थः । आबन्तप्रयोगसूचितमर्थं स्फुटप्रतिपत्तये आह । प्रत्ययस इत्यादि ॥ इति विसर्गसन्धिः ॥

ससजुषो रुः ॥ पदस्येत्यनुवृत्तं ससजूर्भ्यां विशेष्यते विशेषणेन तदन्तविधिः। न च सजूःशब्दांशे "ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति" निषेधः शङ्क्यः। तस्य प्रत्ययविधिविषयत्वात्। सान्तं सजुष्शब्दान्तं च यत्पदं तस्य रुः स्यात् स चालोन्त्यस्य। एवं स्थिते फलितमाह। पदान्तस्येति। सजुष्शब्दस्येति। तदन्तस्य पदस्येत्यर्थः। तेन सजुष इत्यादौ नातिप्रसङ्गः। न च सजूरित्यत्राव्याप्तिः। व्यपदेशिवद्भावोऽप्रातिपदिकेनेति निषेधादिति वाच्यम्। येन विधिरिति सूत्रे शब्दकौस्तुभे ऽस्य प्रत्याख्यातत्वात्। व्यपदेशिवद्भावोऽप्रातिपदिकेनेति,

---

तस्य प्रत्ययविधीति। अत एव येन विधिरिति सूत्रे भाष्ये प्रत्ययविधिभिन्ने ऽप्तृन्नित्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्तविधिप्रतिपादनं स्वसा परम स्वसेत्युदाहृतं च संगच्छते। अस्य समासप्रत्ययविधाविति निषेधानुवादकतया एव युक्तत्वाच्च। यत्त्वस्य ज्ञापकं सपूर्वाच्चेति सूत्रम्। अन्यथा पूर्वादिनिरित्यत्र तदन्तविधिनैव सिद्धे किं तेन तत्प्रत्ययविधौ प्रतिषेध इत्यस्यैव ज्ञापकमिति वक्तुं शक्यम्। अत एव तदन्तविधिसूत्रभाष्ये समासेत्यादिनिषेधवदस्य न कथनमिति बोध्यम्। प्रत्याख्यातत्वादिति। फलाभावात्सूत्रान्ताठ्ठक्, दशान्ताड्ड, इत्यादावन्तग्रहणसामर्थ्येन व्यपदेशिवद्भावाप्रवृत्तेरिति भावः। नन्वेकगोपूर्वादित्यस्य केवलैकशब्दगोशब्दयोरप्रवृत्त्यर्थं सा ऽऽवश्यकी सूत्रान्ताद्दशान्तादित्यर्थे च। तत्रान्तग्रहणं तु प्रत्ययविधौ तदन्तग्रहणनिषेधात्तदन्ते प्रवृत्त्यर्थमावश्यकमिति न तत्सामर्थ्याद्व्यपदेशिवद्भावाप्रवृत्तिर्वक्तुं शक्या। न च भयाढ्यादाविव सूत्रान्तादित्यादौ विशेषणविशेष्यभावव्यत्यासेन सिद्धे ऽन्तग्रहणसामर्थ्यं सूपपादमिति कौस्तुभोक्तरीत्या निर्वाहः। समासप्रत्ययविधावित्यादीनां सूत्रशब्दादेर्विशेष्यत्वे तात्पर्यग्राहकत्वस्य सत्त्वेन विपरीतस्य तस्य वक्तुमशक्यत्वात्। न चास्यां मानाभावः। पूर्वात्सपूर्वादिनिरित्येकयोगेन सिद्धे पृथग्योगकरणस्य मानत्वात्। न चेष्टादिभ्य इत्यत्रानुवृत्त्यर्थं तथा पाठः। अत एवानिष्टीत्यादिसिद्धिरिति वाच्यम्। ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात्। एकयोगे ऽपि तत्रैव स्वरितत्वबलेन तावत एवोत्तरत्रानुवृत्तौ बाधकाभावाच्च। व्यपदेशिवद्भावस्य प्रातिपदिके निषेधस्वीकारादेव नान्तादसंख्यादेरिति चरितार्थम्। अन्यथा पञ्चम इत्यादावपि व्यपदेशिवद्भावेन संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेवेत्यरुचेराह। व्यप-

ग्रहणवतेति, च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति दिव उत्-सूत्रे कैयटहरदत्ताभ्यामुक्तत्वाच्च । एवं च परमसजूर्भ्यामित्याद्यपि निर्बाधम् । एवं स्थिते इह सजुष्शब्देन तदन्तविधिर्नेति प्राचामुक्तिरापातत इत्यवधेयम् ।

भोभगो ॥ असन्धिः सौत्र इति । भगोअघोशब्दयोरोकारस्याकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः । यदि तु भोस्, भगोस्, अघोस्, इति सान्तं रान्तं वा अनुकृत्य भो, इत्यादीनां त्रयाणामलोन्त्यस्य यः स्याद्-पूर्वस्य रोश्चेति व्याख्यायते तर्हि असन्धिर्न्याय्य एव । युक्तं चैतत् । अन्यथा विभोरिदं सुप्रभा गौर्यस्य स सुप्रभगुस्तस्य सुप्रभगोरिदं रघोरिदमित्यत्रापि यत्वापत्तेः । भवति ह्ययं भो, शब्दादिपूर्वो रुः । न चात्र भोशब्दादेर्लाक्षणिकत्वादग्रहणम् । विभाषा भवद्भगवदघवतामोच्चावस्येति वार्तिकेन निष्पन्नानां भवदादिप्रकृतिकानां भोशब्दादीनामपि लाक्षणिकत्वाविशेषात् । अनर्थकत्वमप्युभयत्र तुल्यम् । रुविशिष्टानामेवार्थवत्त्वात् । ननु रोरुकारस्यानुबन्धत्वाद्रेफमात्रं विसर्गस्य स्थानि तथा चानल्विधाविति स्थानिवद्भावो न स्यादित्याशङ्क्याह । न ह्ययमिति । यथा ऽग्रहीदित्यत्र ग्रहोलिटीति दीर्घस्य स्थानिवद्भावेनेट्त्वादिट ईटीति प्रवर्त्तते । एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्तेतेति

---

देशिवद्भाव इत्यादि । दिव उत्सूत्रं यत्रेति बहुव्रीहिणा तत्सूत्रघटिते पादे इत्यर्थः । एवं च दिव उदिति सूत्रे हरदत्तेनेन्द्रे चेति सूत्रे कैयटेनोक्तमिति भावः । येन विधिरिति सूत्रे कैयटेन सूत्रोपात्तान्तादिशब्दविषयतास्येति वदता स्पष्टमेव प्रत्ययविधिविषयतोक्ता । असमासे निष्कादिभ्य इति सूत्रे भाष्ये कैयटे च स्पष्टमनयोः प्रत्ययविधिविषयतोक्तेति दिक् । इत्याद्यपीति । आदिना सजूर्भ्यामिति ।

ननु सान्तानुकरणे विभाषा भवदिति वार्त्तिकनिष्पन्नानां ग्रहणं न स्यादत आह । रान्तं वेति । कृतरुत्वानुकरणमित्यर्थः । अलोन्त्यस्येति । न च भो राजसे इत्यादौ रो रीति लोपे कृते एकदेशविकृतन्यायेन भोःशब्दत्वादन्त्यस्यौकारस्य यत्वापत्तिरिति वाच्यम् । तेषामभिधाने एषां रोरपूर्वस्य च रोरिति

